न ज्ञायत' इति च कदाचित्प्रतिभासस्स्यात्। नचैवमस्ति॥

[1]अतीतानागतविषयग्रहणस्मरणेषु व्याहारव्यवहारयोरभावे, भावेऽपि, ततः प्रागेव विदितत्वप्रतीतेः नानुमानिकी तत्र * विषयप्रकाशसिद्धिः, नतरां तत्पूर्विका तत्र बुद्धिसिद्धिः। तथाहि– केनचित्प्रेरितः प्रणिधाय स्मृत्वाऽनन्तरमेव प्रतिवदति 'स्मृतमद्य मये' ति; नचायमेव व्याहारस्तत्र लिङ्गम्, तत्पूर्वकत्वात्[2]; अन्योन्याश्रयणापत्तेश्च। स्वव्याहारेण स्वज्ञानानुमानं क इव निरपत्रपः प्रतिजानीत?

(स्वयंप्रकाशत्वे हेत्वन्तरम्)

अन्यच्च – यत्सम्बन्धादर्थान्तरे यो व्यवहारः, धर्मभेदो[3] वा, स तस्मिन्नुपलभ्यमानस्तत्स्वरूपप्रयुक्तः, न तु तत्सम्बन्धनिबन्धनः। यथा सत्तासंबन्धात्पृथिव्यादिषु सद्व्यवहारः रूपसम्बन्धाच्च चाक्षुषत्वं सत्तायां रूपे च। एवं संवित्सम्बन्धात्प्रवर्तमानो घटादिषु प्रकाशत(?)इति व्यवहारः, प्रकाशमानत्वं वा धर्मः संविदि तु परिदृश्यमानो न संवित्सम्बन्धापेक्षः, अपितु तत्स्वरूपप्रयुक्त इति स्वयंप्रकाशत्वात्सैवात्मेति[4]।

(लाघवादपि संविदतिरिक्तात्मनिरासः)

किञ्च योपि संविदोऽन्यं संवेदितारमभ्युपगच्छति, अभ्युपगच्छत्येवासौ संविदम्। नह्यसत्यामेव संविदि 'संवेत्ती'त्युपपद्यते। एवं चेत्, उभयवादिसंप्रतिपन्नतया सैव§वरं वेदित्री भवतु। किमन्येन कल्पितेन।

(अहं जानामीत्यस्यातिरिक्तात्मासाधकत्वम्)

नन्वहं जानामीति ज्ञानातिरिक्तस्तदाश्रयभूतोऽयमात्मा प्रती-

---

१. किञ्चातीताद्यर्थानुमानादिस्थले प्राकट्यदर्शनायोगात्कथं प्राकट्येन बुध्यनुमानम्? वाचिकव्याहारेण कायिकहानोपादानादिना वा प्राकट्यानुमानमिति न — तत्र तयोरभावेपि विदितत्वज्ञानसत्त्वात्। तयोर्भावेपि, तदुत्पत्तेः प्रागेव विदितत्वज्ञानाच्च। २. अयं शब्दप्रयोग एतज्ज्ञानजनक इति ज्ञात्वा किल व्याहारः क्रियते; ततो ज्ञानज्ञानं प्रागेवापेक्षितमिति। ३. प्राकट्यम्। ४. अतिरिक्तात्मसत्त्वे तदधीनप्रकाशा संवित् स्वयंप्रकाशा न स्यादिति।

* विषयसिद्धिः § सैव परम्

यते—सत्यम्; स तु विकल्परूपतया साक्षात्प्रत्यक्षं इति न शक्यस्संश्रयितुम्। भेदज्ञानसिद्धवत्कारेण पृथग्वस्तुतया—गृहीताव्यभिचारेण सहोपलम्भनियमेन, अप्रकाशात्मनश्च स्वभावविरोधादेव प्रकाशायोगात् प्रकाशस्वाभाव्ये च संवेदनत्वमित्यादिना वा प्रकाशात्मनोऽहमित्यंशस्य तत्त्वमेव दुरुपगमम्। (ग्राहकवत् ग्राह्यस्याप्यसत्यत्वमुक्त्वा निगमनम्)

ग्राह्यविकल्पप्रत्युद्धारेऽप्येष एव प्रकारः। अतो वासनाभिधानसमनन्तरप्रत्ययसामर्थ्यादनाद्यविद्यावशाच्च समारोपितावास्तवग्राह्यग्राहकविकल्पोल्लेखिनी स्वयंप्रकाशा संविदेव परमार्थसती; सैवात्मेति सौगताः प्रकटाः प्रच्छन्नाश्च। यथाहुः प्रकटाः—

'अविभागोपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥' इति।

यथा वा प्रच्छन्नाः—'शुद्धं तत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः।
ज्ञातृज्ञेयविभागस्य मायैव जननी ततः ॥' इति।

(प्रकटबौद्धमतखण्डनम्)

अत्राह — क्षणभङ्गिनी प्रतिविषयमन्याऽन्या च संविच्चकास्ति। सैव चेदात्मा, पूर्वेद्युर्दृष्टमपरेद्युः 'अहमिदमदर्श' मिति कथमिव प्रत्य-

---

१. प्रत्यक्षत्वसंश्रयणमशक्यमित्यर्थः। २. दृष्टव्यातिरेकेन संवित्सहोपलम्भनियमरूपहेतुनाऽहमित्यंशस्य प्रकाशात्मत्वं संविद्रूपत्वं सिद्धम्। एममहमर्थस्याप्रकाशरूपत्वे प्रकाशायोगः, प्रकाशाप्रकाशयोर्विरोधात्; प्रकाशरूपत्वे च संवेदनत्वापत्तिरिति हेतुनापि। एवं संविदभिन्नस्याहमर्थस्य संविद्भिन्नत्वज्ञानं पारमार्थिकतया सिद्धवत्कृत्य संविदपेक्षया पृथग्वस्तुतया स्थितिर्दुरुपगमेत्यर्थः। **पृथग्वस्तुतये**त्यन्तस्य **तत्त्वमेव दुरुपगम**मित्यत्रान्वयः। ३. ग्राहकरूपस्य विकल्पस्याहमर्थस्येव, ग्राह्यस्य घटादेरपि घटमहं जानामीति सहोपलम्भनियमादिना पृथग्वस्तुत्वनिरासे इत्यर्थः। विकल्पो नाम व्यावर्तकांशः। ४. अव्यवहितपूर्वं ज्ञानम्। ५. बुद्धिरूप आत्मा ग्राह्यग्राहकाभिन्नोपि भ्रान्तैर्भेदवानिव दृश्यते। ६. अनिवृत्तिप्रसंगात् — अनिर्मोक्षप्रसंगात्। ७. **दृष्ट**मिति, **अपरेद्यु**रिति च **प्रत्यभिजानीया**दित्यत्रान्वेति।

भिजानीयात् । न च निरालम्बनप्रतिभाभेदमात्रतया इह समाधेयम्, निरालम्बनत्वप्रतिज्ञायाः प्रत्यक्षादिसकलप्रतीतिबाधितविषयत्वात् । साधनस्य[1] च सालम्बनत्वे, तदविशेषादशेषशेमुषीणां तथात्वापत्तेः । निरालम्बनत्वे च साधनाभावादेव साध्यासिद्धेः । प्रपञ्चितश्च पूर्वोत्तरमीमांसाभागयोर्[2]निरालम्बनत्वप्रतिषेधः; यथार्थख्यातिसमर्थनेन च शास्त्रे[3] इति न व्यावर्ण्यते ।

( सन्तानाश्रयणेपि प्रत्यभिज्ञाऽनिर्वाहः )

अतएव न सन्तानाश्रयणेनापि प्रत्यभिज्ञोपपादनं साधीयः । विज्ञानक्षणव्यतिरिक्तस्य स्थायिनोऽनुसन्धायिनस्सन्तानस्याभ्युपगमे स्वसिद्धान्तत्यागः, परसिद्धान्ताभ्युपगमश्च । अनभ्युपगमे प्रत्यभिज्ञाऽनुपपत्तिः । न ह्यन्येनानुभूतेऽन्यस्य प्रतिसन्धानसम्भवः । न च सुसदृशतया भेदाग्रहणेन प्रदीपादाविव प्रमातरि प्रत्यभिज्ञाभ्रान्तिः, युज्यते[4] हि तत्रैकस्यैव पूर्वापरव्यक्तिदर्शिनस्तुल्यसंस्थानतया व्यक्तीनां भेदमविदुषस्तथाभ्रमः, इह तु संविद्व्यक्तयः परस्परवार्तानभिज्ञा निरन्वयविनाशिन्यश्च सुगतमत इति न तास्वेकत्वभ्रमस्याश्रयता विषयता वा संभविनी । न च सदृशत्वेपि, अन्येन कृतमात्मकृततयाऽन्योऽनुसन्धातुमलमित्यागमापायिसंवित्सन्तानाश्रयःप्रत्यभिज्ञानक्षणस्थायी चेतनोऽभ्युपगन्तव्यः। (एतद्दोषोद्धाराय प्रच्छन्नेन संविदजत्वनिर्विकारत्वनिर्भेदत्वस्थापनम्)

कश्चिदाह[5] – न संविदनित्या, प्रागभावाद्यसिद्धेः । तदसिद्धिश्च

१. निरालम्बनत्वगमकपरामर्शस्य । २. भागपदेनैकशास्त्र्यं दर्शितम् । पूर्वभागे १ - १. सत्संप्रयोगसूत्रवृत्तौ, उत्तरभागे २ - २. पादे । ३. न्यायतत्त्वे । ४. प्रदीपदृष्टान्तेन प्रत्यभिज्ञानोपपादनं ग्रहीत्रैक्यमङ्गीकृत्य ग्राह्यमात्रभेदस्वीकारे स्यात् । ग्रहीत्रैक्यस्याप्यस्वीकारे तु पूर्वप्रतिसन्धानाद्यभावेनात्मनः प्रत्यभिज्ञाश्रयत्वायोगान्न किमपि प्रत्यभिज्ञाविषयीभवेदिति । ५. इष्टसिद्धिग्रन्थकारो विमुक्तात्मनामा आगमापायिसंवित्सन्तानेत्युक्तमसहमानोऽद्वैती । इयं संविदात्मशङ्कासमाधानसरणिः प्रायो जिज्ञासाधिकरणभाष्येऽनूदितैवेति सर्वं ततस्सुगमम् । ६. उत्पन्ना ।

तस्याः स्वतस्सिद्धत्वात्¹ । न हि स्वतसिद्धस्य प्रागभावादयस्स्वतोऽन्यतो वा सिध्यन्ति । स्वयं हि स्वाभावमवगमयत्, सद्वाऽसद्वा साधयेत्; सत्त्वे, अभाव एव नास्तीति कथं साधयेत्? असत्त्वादेव साधकस्य, पक्षान्तरे नतरां साधकत्वमिति न स्वतस्तावत्तत्सिद्धिः । नाप्यन्यतः, अनन्यगोचरत्वादनुभूतेः; अनुभाव्यत्वे च घटादिवदननुभूतित्वप्रसङ्गात् । अतस्सा न जायते ॥ जन्माभावादेवेतरेऽपि भावविकारा निराकार्याः; तत्प्रतिबद्धत्वात्तेषाम् । अत एव नानात्वमपि संविदि प्रत्युक्तम् । उत्पत्तिमत्त्वव्यापकनिवृत्त्या तद्व्याप्यभूतनानात्वस्यापि निवृत्तिसिद्धेः । नह्यजं विभागयस्ति । चेत्यत्वाच्च भेदेतरेतराभावादयो न तद्धर्माः, रूपादिवत् । अतोऽ*स्या न मेयः कश्चिदपि ध-

---

१. स्वयंप्रकाशत्वात् । स्वयंप्रकाशत्वं हि स्वेतराप्रकाश्यत्वविशिष्टस्वप्रकाश्यत्वम् । तत्र स्वकाले स्वप्रागभावाभावात्, स्वप्रागभावकाले च स्वाभावात् स्वप्रागभावस्य स्वप्रकाश्यत्वं न संभवति । नापि ज्ञानान्तरप्रकाश्यत्वम्, स्वप्रागभावस्य स्वात्मकप्रतियोगिनं विहाय प्रकाशनायोगात्, स्वस्य च स्वान्यग्राह्यत्वे स्वयंप्रकाशत्वघटकस्वेतराप्रकाश्यत्वदलभङ्गापत्तेरिति भावः ॥ तद्दलप्रवेशावश्यकतां दर्शयति २.अन्विति। ३.ऋद्धिपरिणामापक्षयविनाशाः । ४.जन्मव्याप्यत्वात् । ५. जन्माभावादेव । ६. उत्पत्तिमत्वरूपस्य व्यापकस्याभावेन । नानात्वं सजातीयभेदः; स एव विभागः। भेदो वैजात्यम्। 'भेदः प्रसिद्धतरो लोके,इतरेतराभावश्चे' (२ पु) तीष्टसिद्धिवाक्यानुरोधेन भेदेतरेतराभावयोः पृथग्ग्रहणम् । यद्वा विभागस्सर्वविधभेदः ; 'अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभागस्ये' ति अत्र वक्ष्यमाणत्वात् । इष्टसिद्धिग्रन्थे विभागशब्दस्य देशपरिच्छेदपरत्वप्रतीतावपि तत्रापि अजत्वहेतुना 'अमेयानन्ते' ति कारिकोक्तमेयशून्यत्वत्रिविधपरिच्छेदराहित्ययोस्साधनान्न तात्पर्यविरोधः । संवित्पक्षकानुमानमुक्त्वा धर्मपक्षकानुमानमाह चेत्यत्वादिति । चेत्यत्वं चेतनाविषयत्वम् । * अतो नास्यानुमेयः इति, अतोऽस्यानुमेय इति च पाठः 'अनु' इत्यस्य व्यर्थत्वादप्यशुद्धः ; 'यदपि नास्या मेयो धर्मोप्यस्ती'ति वक्ष्यमाणानुवादानुसाराच्च; इष्टसिद्धिग्रन्थानुरोधाच्च । तद्ग्रन्थे आदौ चेत्यनेन स्वत-

मोऽस्ति। अतो निर्धूतनिखिलभेद(दा)विकल्पनिर्धर्मप्रकाशमात्रैकरसा कूटस्थनित्या संविदेवात्मा परमात्मा च । यथाह 'याऽनुभूतिरजाऽमेयाऽनन्तात्मे' ति । सैव च वेदान्तवाक्यतात्पर्यभूमिरिति तेषां परिभाषा। यथाह तद्वार्तिककारः —

'परागर्थप्रमेयेषु या फलत्वेन संमता ।
संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥
अप्रामाण्यप्रसक्तिश्च स्यादितोऽन्यार्थकल्पने ।
वेदान्तानामतस्तस्मान्नान्यमर्थं प्रकल्पयेत् ॥' इति।

(प्रच्छन्नमतभङ्गः)

तदिदमलौकिकमवैदिकं च दर्शनमित्यात्मविदः । तथाहि —

(लोकानुभवापेतत्वोपपादनम्)

'संविदिति स्वाश्रयं प्रति सत्तयैव कस्यचित्प्रकाशनशीलो ज्ञानावगत्यनुभूत्यादिपदपर्यायनामा सकर्मकः संवेदितुरात्मनो धर्मः प्रसिद्धः। तथैव हि सर्वप्राणभृत्प्रत्यात्मसिद्धोऽयमनुभवः, 'अहमिदं संवेद्मी' ति। तस्यास्योत्पत्तिस्थितिनिरोधाश्च सुखदुःखादेरिव प्रत्यक्षाः प्रकाशन्ते । स्वापमदमूर्च्छादशासु च योग्यानुपलम्भनिराकृतस्तत्सद्भावो नाभ्युपगममर्हति । यदि हि तास्वपि दशासु संवेदनमवर्तिष्यत, ततः प्रबोधसमये-

---

ऽसिद्धत्वसूचनान्मेयाभिन्नत्वस्य लब्धत्वादमेयेत्यत्र बहुव्रीहिः । तत्रामेयत्वं प्राग्विवृतम्; अनन्तत्वं पश्चात्; अत्रत्वमेयत्वं पश्चादिति भेदः। 1 भेदविकल्पो भेदप्रकारः।

१. 'यानुभूतिरजाऽमेयाऽनन्तात्माऽऽनन्दविग्रहा । महदादिजगन्मायाचित्रभित्तिं नमामि ता' मितीष्टसिद्धिमङ्गलश्लोको वक्तव्यार्थसंग्रहरूपः । २. प्रमेयभूतबाह्यार्थविषये प्रमाणफलत्वेन कल्पिता,प्रमाणवृत्तिप्रतिबिम्बतया साङ्ख्यमता वा संविदेव वेदान्तोक्तं चिद्रूपं ब्रह्म । अन्यथा शशविषाणादिवदत्यन्ताप्रसिद्धार्थपरत्वे वेदान्तस्याप्रामाण्यापत्तिः । तस्मादतोऽन्यं प्रसिद्धसंविद्भिन्नमर्थं न कल्पयेदिति । यद्वा सा संविदेवेह व्यवह्रियमाणो मेयो ग्राह्यग्राहकरूपोऽर्थः । तदध्यस्ततादृगर्थापेक्षयाऽन्यवास्तवमेयकल्पने चाद्वैतवेदान्ताप्रामाण्यमिति ॥

ऽनुसमधास्यत। नचानुसन्धीयते। अत एव हि,'इयन्तं कालं न किञ्चिदहमज्ञासिष'मिति प्रबुद्धः प्रत्यवमृशति। यावदनुभूतपदार्थस्मरणनियमाभावेपि, संस्कारविच्छेदनिमित्तप्रायणादिप्रबलहेतुविरहेपि नित्यवदस्मरणमनुभवाभावमेव साधयति। न च सत्यपि संवित्प्रकाशे विषयावच्छेदविरहादहङ्कारगोचरापायाद्वा तत्स्मृत्यनुदयः, अर्थान्तराभावस्य तदग्रहणस्य चार्थान्तरप्रकाशप्रयुक्तकार्यप्रतिबन्धकत्वायोगात्। त्रितयावभासेपि यथास्वमवभासानां स्वगोचरस्मरणहेतुत्वात्। न च प्रत्यभिज्ञाबललब्धस्थेमाऽहमर्थः, स्वापादिदशासु निधनमुपगत इति शक्योऽभिधातुम्। अत एव हि, 'इयन्तं कालमहमस्वाप्स'मिति प्रबोधे परामर्शः। न च निर्विषया निराश्रया वा संविन्नाम काचित्संभवति, अत्यन्तानुपलब्धेः। सम्बन्धिशब्दाश्च संविदनुभूतिज्ञानप्रकाशादिशब्दा इति शब्दार्थविदः। नह्यकर्मकस्य जानात्यादेरकर्तृकस्य वा प्रयोगो लोके वेदे वा।

(संविदा स्वप्रागभावाद्यग्रहनिरासः)

यत्तु स्वतस्सिद्धस्य सत्त्वे तद्विरोधादेव प्रागभावादेस्तदानीमवस्थानासंभवान्न तत्सिद्धिरिति – तदतिस्थवीयः. न हि संविदा स्व-

---

१. नित्येन तुल्यमस्मरणम्। नित्यं तदस्मरणमिति यावत्। २. अहमर्थविलयात्। ३. सुषुप्तौ अहमर्थाभावो विषयाग्रहणञ्च सुषुप्तिकालाभ्युपगतसंवित्प्रकाशाधीनजागरकालिकतत्स्मरणरूपकार्यप्रतिबन्धके न भवतः। अन्यथा पृष्ठताडनेन दन्तभङ्गापत्तेरिति। ४. ननु सर्वस्मिन्नपि ज्ञाने ज्ञातृज्ञेयज्ञानत्रयभानस्य घटमहं जानामीत्याद्याकारबलादभ्युपेयत्वात् अन्वयव्यतिरेकानुविधानवशात् ज्ञात्रादिभानमपि ज्ञानस्मरणे हेतुः कल्प्यत इत्यत्राह त्रितयेति। एकानुभवस्यान्यस्मृतिहेतुताया लोकेऽदर्शनेन तत्स्मरणं प्रति तत्प्रकाशो हेतुरित्यस्यैव क्लृप्ततया कल्पनान्तरे मानाभावात् ज्ञात्राद्यभानात्तदस्मरणेपि ज्ञानस्मरणं स्यादिति। अपीत्यनेन तदसंमतिः, तदादरे सुषुप्तौ ज्ञानस्याप्रकाश एव स्यादिति च सूच्यते। ५. योऽहं पूर्वेद्युर्गामपश्यम्, सोहमिदानीं क्रीणामीत्येवम्। ६. नाशम्।

कालवर्तिन एवार्थास्सिध्यन्तीत्यस्ति नियमः, अतीतानागतयोरसंवेद्यत्वप्रसङ्गात्। [1]अथ संवित्प्रागभावादेस्सिध्यतस्तत्समकालतया भवितव्यमिति; किमेवं[2] क्वचिद्दृष्टम्? हन्तैवं सति तत्सिद्धेर्न प्रागभावाद्यसिद्धिः॥ तत्प्रागभावः तत्समकाल इत्युन्मत्तवचः। ऐन्द्रियकप्रत्यक्षस्वभावो ह्ययं स्वसमकालपदार्थप्रकाशकत्वं नाम; न ज्ञानमात्रस्य, प्रमाण[3]मात्रस्य वा। एतेन (एतेनै?) तदपि पराकृतम् —

'[4]मानं स्वयंप्रकाशत्वात्स्वतस्सच्चेत्सदाऽस्त्यतः।
तन्मेयं च सदाऽस्त्येव मानं मेययुगेव हि॥' इति।

न हि मानस्य स्वसत्ताकालेऽर्थाविनाभावो मेययोग[5]:, किन्तु यद्देशकालादिमत्तया मेयमवभासते तादृशतद्रूपमिथ्यात्वविरोधित्वम्। अत एव 'स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शना' दित्यपि प्रलापः।

( प्रमाणाभावात्प्रागभावासिद्धिरित्यस्य भङ्गः )

अथ संवित्प्रागभावादेरवर्तमानतया न प्रत्यक्षत्वम्। लिङ्गाद्यभा-

१. नन्वर्थान्तराणामतीतानागतानां ग्रहणमस्त्येव। संवित्प्रागभावतद्ध्वंसादिविषय एवायं नियमः — यत्र गृह्यमाणत्वविशिष्टसंवित्प्रागभावत्वादि, तत्र तत्समकालत्वमितीति शङ्कते अथेति। २. संवित्प्रागभावस्य परं समकालवर्तिसंविदा ग्रहणम्। ३. प्रमितिसामान्यस्य। ४. माने स्वयंप्रकाशत्वस्य अत एव स्वतःप्रामाण्यस्य चेष्टत्वात् तस्य सत्त्वे, यत् सत् तत्सर्वदैव सदिति न्यायेन सदा सत्त्वमिति तत्प्रमेयस्यापि सदातनत्वमेव, मानस्य मेयाव्यभिचारित्वादित्यर्थः। अतो मानमेव न स्वीकार्यम्; नित्यमेयमात्रं वा स्वीकार्यमिति भावः। ५. मेयेन नियतयोगः। मानस्य मेययुक्तत्वं न स्वसत्ताकालव्यापिस्वमेयकत्वम्, किन्त्वबाधितमेयरूपकत्वम्। अयमपि कश्चिदविनाभाव इति भाष्ये। नायं समानकालिकत्वघटितः, किन्तु तन्मितिस्तन्मेयनिरूपितप्रकारतासंबन्धेन यद्देशकालादौ, तन्मेयं दैशिककालिकस्वरूपादिसंबन्धेन तत्रैत्येवंरूप इति। प्रसिद्धश्च प्रमायाः प्रमेयाविनाभावः। अत एव न्यायसूत्रादौ 'अव्यभिचारी' ति भ्रमवारणं क्रियते। अत्रापि 'युगेव' ही ति हिशब्दैवकाराभ्यां मेययोगानियमप्रसिद्धिर्दर्शिता।

त्वाच्च न प्रमाणान्तरतस्सिद्धिरिति – यद्येवम् , अकारणं तर्हि स्वतस्सिद्धत्वं प्रागभावाद्यसिद्धेः । प्रमाणाभाव एव हीदानीं वाच्यः; न च तदभावश्शक्योऽभिधातुमित्युक्तमेव, योग्यानुपलब्ध्यैवाभावस्य समर्थितत्वात् ।

( कादाचित्कत्वे युक्त्यन्तरम् )

अपिच प्रत्यक्षसंवित् स्वसत्ताकाले स्वविषयस्य सद्भावं साधयन्ती यत्तस्य न सर्वदा सत्तां साधयति, तदवसीयते 'अहमिदानीमेवास्मि नान्यदे'ति कालविशेषावच्छिन्नैव सा चकास्तीति । इतरथा घटादेरपि नित्यत्वप्रसङ्गात् । एवमनुमानादिसंविदोऽपि । न च प्रत्यक्षानु-

१. प्रागभावो नास्तीत्यत्र स्वतस्सिद्धत्वं न हेतुर्भवेत्; किन्तु प्रमाणाभाव एव । स च नास्ति; प्रागभावस्यानुपलब्धिप्रमाणकत्वात् संविदनुपलब्ध्यैव संवित्प्रागभावस्योक्तत्वात् (पु. ३० – ३१ ) । २. प्रत्यक्षं कालविशेषावच्छिन्नं भाति स्वकाल एव विषयप्रकाशकत्वे सति कालविशेषावच्छिन्नतया तत्प्रकाशकत्वादिति युक्त्यन्तरमाह **अपिचे**ति । ज्ञानस्वप्रकाशस्य ज्ञानविषयकप्रत्यक्षतुल्ययोगक्षेमत्वात्प्रत्यक्षेणेव तेनापि प्रकृतकालावच्छिन्नतयैव ज्ञानभानम् । तत्रानया युक्त्या प्रत्यक्षसंवित् स्वस्मिन् किञ्चित्कालावच्छिन्नत्वभानं कालान्तरानवच्छिन्नत्वविशिष्टमनुमापयतीति । **अहमि**ति संविदुच्यते । संविदिदानीमेवास्ति नान्यदेति पुरुषो मन्यत इति वक्तव्ये, 'अहमिदानीमेवास्मी' ति संविन्मन्यत इति निर्देश औपचारिकः, घटो गुणमाकाङ्क्षति, भावना अंशत्रयमपेक्षत इत्यादिवत् । ३. प्रत्यक्षसंविदस्सर्वकालेऽपि भाने, सर्वकालावच्छिन्नत्वे इति वा । ४. अनुमानादिसंविदोऽपि कालविशेषावच्छिन्ना एव चकासतीत्यर्थः । तासां सर्वकालावच्छिन्नत्वेपि विषयनित्यत्वापत्तिः–यत्रानुमितिश्शाब्दधीरन्या वा संवित् स्वकालवर्तमानतया घटादिग्राहिणी, तत्र तस्यास्सर्वकालावच्छिन्नत्वे तद्वस्तुनित्यत्वापत्तिरिति । पूर्वकालाद्यवच्छिन्नतयाऽभानरूपयोग्यानुपलब्ध्या संवित्सामान्यानित्यत्वं प्रागेवोक्तम् । तत्र सति इयमपि यथासंभवं युक्तिः । एवञ्च **एव**मित्यस्य प्रत्यक्षवत् वर्तमानविषयग्राहिण्य इत्यप्यर्थो भवेत् । तदोद्देश्यविशेषणम् । एवं कतिपयसंविदनित्यत्वे तत्सामान्यादितरत्रापि तथात्वं युक्तमिति च भावः । विस्तरस्त्वन्यत्र ।

मानादिभेदशून्या निर्विषया निराश्रया धीस्सम्भवतीत्युक्तमेव।

( संविदोऽननुभाव्यत्वभङ्गः )

नचान्याविषयत्वात्संविदः अन्यतस्तत्प्रागभावाद्यसिद्धिः; अज्ञासिषमिति प्राक्तनसंविदोऽद्यतनधिया विषयीक्रियमाणत्वात्। प्रतिकू[1]लानुकूलविषयनियतहानोपादानादिलिङ्गावगम्यत्वाच्च परसंविदः। तदनभ्युपगमे च शब्दार्थ[2]ग्रहणासंभवेन वैदिकलौकिकसमस्तव्यवहाराभावप्रसङ्गः। गुरूपसर्पणाद्यनुपपत्तिश्च; ज्ञानवत्त्वेन तस्याप्रतीतेः।

( अनुभाव्यत्वेऽनिष्टापादनपरिहारः )

नचान्यविषयत्वेऽननुभूतित्वम्। स्वाश्रयस्य स्वसत्तयैव प्रकाशमानत्वं, स्व[3]विषयसाधनत्वं वा ह्यनुभूतित्वम्। ते च संविदन्तरविषयभावेपि स्वानुभवसिद्धे न भ्रश्यत इति कथमननुभूतित्वप्रसङ्गः? घटादेस्तु तथास्वाभाव्याभावादेवाननुभूतित्वम्, नानुभाव्यत्वात्। अपिचाननुभाव्यत्वेपि समानस्तत्[4]प्रसङ्गः गगनकुसुमवत्। नचात्मनोऽनुभूतित्वम्, अनुभवितृत्वात्। नाप्यसावननुभाव्यः, अनुभवस्येव स्वतस्सिध्यतोप्यस्य स्वपरसंवेद्य[5]त्वाभ्युपगमात्। वेद्यत्वेऽनात्मत्वापादनमवेद्यत्वेऽपि समानं[6] पूर्ववत्। यदि तु गगनकुसुमस्यासत्त्वमेवानात्मत्वाननुभूतित्वप्रयोजकमास्थीयेत, आस्थीयतां तर्हि घटादेरप्यसंविदाश्रयत्वाज्ञानाविरोधित्वयोरेव तत्प्रयोजकत्वम्। अथ ते[7] अपि विषयत्वे स्यातामिति चेत्, अविषयत्वेपि तथैवेत्यलमप्रतिष्ठितकुतर्कापहसनेन॥

---

१. अयमेतद्विषयकप्रतिकूलताज्ञानवान् एतत्कर्मकहानकर्तृत्वादित्येवम्। २. वृद्धव्यवहारादेः प्रयोज्यवृद्धादिज्ञानानुमापकत्वमुखेनैव शब्दार्थग्राहकत्वादिति भावः। ३. जडज्ञानवादिनैयायिकादिसाधारण्यायेदम्। ४. अननुभूतित्वप्रसङ्गः। ५. स्वकीयपरकीयधर्मभूतज्ञानविषयत्वोपगमात्। ६. गगनकुसुमवत्। ७. संविदात्मनोर्वित्तिविषयत्वाङ्गीकारे घटादेरिव क्रमेणाज्ञानाविरोधित्वासंविदाश्रयत्वे स्यातामिति चेत् — अवेद्यत्वपक्षेपि गगनकुसुमवत्तत्र तत्र तत्तत्स्यादिति।

( अजत्वस्य विकारान्तरावारकत्वम् )

यदपि जननविरहादनुभूतेर्विकारान्तरनिरसनम्, [1]व्यभिचरति तदपि प्रागभावे। जन्माभावेपि तस्य विनाशदर्शनात्। भावविशेषणोपादानेपि भवदभिमताविद्ययाऽनैकान्त्यम्। सा ह्यनादिरपि विविधविकारवती; विनाशवती च तत्त्वज्ञानोदयात्॥ अपरमार्थास्तद्विकारास्सन्तीति चेत् — परमार्थाश्च ते[2] किं विकारास्सन्ति, जन्मवन्तो वा परमार्थाः[3], येन पारमार्थ्येन विशेषणं साध्यस्य साधनस्य वाऽर्थवत्तामश्नुवीत? तथा च सति साधु समर्थितं तर्ककुशलेनेत्यलमनेन॥

( अजत्वेन निर्भेदत्वानुमानायोगः )

यदपि 'न ह्यजं विभाग्यस्ती' ति — तदपि न, अजस्यैवात्मनो[4] देहेन्द्रियादिभ्यो विभागस्य समर्थितत्वात्। अनादित्वेनाभ्युपगतस्याज्ञानस्य, आत्मनो व्यतिरिक्ततयाऽवश्याश्रयणीयत्वात्॥ अपरमार्थस्स विभाग इति चेत्—परमार्थभेदः किं जन्मप्रतिबद्धः क्वचिद्दृष्टः? निर्बाधप्रतीतिसिद्धश्च[5] दृग्दृश्यभेदः परमार्थ एवेत्यनन्तरमेवोपपादयिष्यामः।

( संविदो निर्धर्मकत्वानुमाने व्यभिचारव्याघातादि )

यदपि 'नास्या मेयो धर्मोप्यस्ति', 'चेत्यानां न चिद्धर्मत्व' मिति च — तदपि शास्त्रानुमानादिप्रमाणसिद्धैस्स्वयंप्रकाशत्वनित्यत्वादिधर्मैस्स्वयमभ्युपगतैरनैकान्तिकम्। न च ते चितिमात्रमिति वाच्यम् — तत्सिद्धावपि तेषु विमतिदर्शनात्। अभ्युपगम्यैव हि संविदं तदनुमेयत्वक्षणिकत्वादि प्रतिजानते वादिनः। स्वरूपभेदाच्च[7]। स्वाश्रयं प्रति सत्तयैव कस्यचित्प्रकाशनं हि संवेदनम्। स्वयंप्रकाशता तु

---

१. स्वरूपासिद्धौ सत्यां दोषान्तरमप्याह। २. तव। ३. किं सन्तीत्यनुषङ्गः। ४. विभाग इत्यनेन भेदसामान्यविवक्षायामनुपपत्तिमाह अजस्येति। सजातीयभेदराहित्यं संविन्नानात्वदर्शनाद्बाधितमित्युक्तम्। ५. अत्र, इष्टसिद्धौ च। ६. सिद्धत्वादित्यर्थः। ७. धर्म्यभिन्नत्वे तदभिन्नाभिन्नस्य तदभिन्नत्वनियमाद्धर्माणां मिथस्स्वरूपभेदोपि न स्यादिति।

सत्तयैवात्मने प्रकाशमानता । प्रकाशश्च चिदचिदशेषपदार्थसाधारणो धर्म[1] इति संवित्सिद्धावेव साधितम् । तदनभ्युपगमे तु व्यवहारानुगुण्यवचनः प्रकाशशब्दः । नित्यता तु सर्वकालवर्तमानता । एकसंख्यावच्छेदः एकत्वमिति । न च[2] जडत्वकालदेशनानात्वाद्यवच्छेदशून्यतारूपत्वात्तेषां न यथोक्तदोष इति युक्तम् ; तथारूपैरपि तैश्चितिधर्मभूतैरनैकान्त्यस्यापारिहार्यत्वात् । संविदि च निषेध्यत्वाभिमतजडत्वानित्यत्वनानात्वादिविरुद्धविविधधर्माभावे निषेधोक्तिरुक्तिमात्रमेव ।। चे[3]त्यश्चाज्ञानमात्मनि दृष्टमिष्टश्च भवताम् ।। अपिच ' अस्या ' इति षष्ठ्या अनुभूतेस्सम्बन्धमभिधाय निर्धर्मत्वं प्रतिज्ञायमानं, वन्ध्यात्वमिव जनन्याः, विरुद्धार्थमापद्येत ।

सिद्धिश्चेदभ्युपेयेत संविदः, स्यात्सधर्मता ।
नचेत्तुच्छत्वमेवोक्तं भवेच्छशविषाणवत् ॥ १० ॥

ननु–सिद्धिरेव सा ; कस्य भोः? यदि न कस्य चित् , न तर्हि सिद्धिरेव । सा हि पुत्रत्वमिव कस्यचित्किञ्चित्प्रति । आत्मन इति चेत्–कष्षष्ठ्यर्थः? तदेवं व्योमारविन्दसदृशवपुषि यथोदितदृशि वेदान्ततात्पर्यवर्णनं वेदान्तायैव स्यात् ।

———

( प्रच्छन्नपक्षेपि प्रत्यभिज्ञानुपपत्तिः )

अपिच[6] नित्यत्वेऽप्यनुभूतेः प्रत्यभिज्ञानुपपत्तिस्तदवस्थैव । सा

---

१. प्राकट्यम् । यद्वा तस्य मीमांसकमतस्य पूर्वं पश्चाच्च खण्डनाद्वक्ष्यमाणो ज्ञानादूरत्वरूपोऽयं धर्मः । अस्य धर्मिरूपत्वं न भवति, किन्तु धर्मत्वमेवेति संवित्सिद्धौ ' संविदेव न ते धर्मास्सिद्धायामपि संविदी ' त्युक्तम् । २. जडत्वानवच्छिन्नत्वं स्वयंप्रकाशत्वम् , कालानवच्छिन्नत्वं नित्यत्वम् , देशानवच्छिन्नत्वं विभुत्वम् , नानात्वानवच्छिन्नत्वमेकत्वमित्येवमभावरूपत्वात् अभावस्य चाधिकरणरूपत्वान्न दोष इत्याशङ्क्य अभावरूपत्वेपि नाधिकरणस्वरूपत्वमित्याह । ३. अनभ्युपगताधिकरणस्वरूपताकमपि किञ्चिद्दर्शयति । ४. सिद्धिसंविदोरैक्यात्संविदस्सिद्धिरिति व्यधिकरणप्रयोगो न कार्य इति भावः । ५. वेदविनाशाय । ६. एवं, ' कश्चिदाहे ' त्यादिनाऽनूदितं क्रमेण निरस्य,

अनुभवितारं पूर्वापरकालावस्थायिनमुपस्थापयति, अहमिदमन्वभूव-मिति। अनुभूतिस्त्वनुभूतिरेव भवताम्, न तां प्रति सा कर्त्री कर्म वा।

( आत्मनि ज्ञातृत्वस्याध्यस्तत्वानुपपत्तिः )

यद्युच्येत– परमार्थतस्तथाभूतापि भ्रान्त्या अनुभवितृतया परिस्फुरति, रजततयेव शुक्तिः। न हि तथ्यमनवलम्ब्य मिथ्यावभासस्योत्थानमिति– तन्न, तर्थासत्यनुभवसमानाधिकरणतया अनुभविताऽहमर्थः प्रकाशेत, 'अनुभूतिरह'मिति, पुरःस्थितभास्वरद्रव्य शङ्ख मुख चन्द्रादेराकारतयेव रजत पीत मुकुरस्थता द्वित्वादि। पृथगवभासमान एवत्वयमनुभवः, दण्ड इव देवदत्तमर्थान्तरमहमर्थं विशिंषन् आलक्ष्यते, अनुभवाम्यहमिति। तदेवमनुभवविशिष्टमस्मदर्थमवभासयन्नयमहम्प्रत्ययः कथमिव विशेषणभूतानुभूतिमात्रावलम्बनः प्रतिज्ञायेत, दण्डमात्र इव दण्डी देवदत्त इति प्रत्ययः ?

---

अथ ज्ञानमात्रनित्यत्ववाद्यद्वैतिमतेपि बौद्धमत इव प्रत्यभिज्ञानुपपत्तिः, तथा ज्ञातुर्नित्यत्वस्यानुभूतेरनित्यत्वस्य चावगाहनादित्याह।

१. अधिष्ठानन्तु सत्यमपेक्षितमिति नानुभूतेरप्यपारमार्थ्यमित्याह। २. भास्वरद्रव्याकारतया रजतता, शङ्खाकारतया पीतता, मुखाकारतया मुकुरस्थता, चन्द्राकारतया च द्वित्वं यथा, तथाऽनुभूतिविशेषणतयाऽनुभवितृत्वं प्रकाशेत। अहंशब्दवाच्यादनुभवितुर्भिन्नतयात्वनुभूतिरवभासते, अहमर्थविशेषणतया च। अनुभवामीत्येतद्धि दण्डीतिवद्विशिष्टपरम्, न विशेषणमात्रपरमित्यर्थः। एतेन–अहंशब्देनाध्यस्तज्ञातृताकमनुभवमेवोक्त्वा धात्वर्थानुभूतौ विषयविषयिण्यां तदभेदभानस्वीकारोऽप्यपास्तः, तिङन्तस्यानुभूतिमात्रपरत्वाभावात्; अहंशब्दस्यानुभवपर्यन्तार्थकत्वे मानाभावाच्च। अतएव– अहंशब्देनाहमर्थत्वमुखेन गौण्याऽनुभूतिरुच्यते सिंहशब्देनेव माणवकः। तत्रानुभवामीति ज्ञातृत्वभानमित्यपि निरस्तम्—गौण्यां मानाभावात्, अहमर्थे वास्तवानुभवितृत्वग्रहणेन प्रतीत्यभ्रमत्वस्य युक्तत्वात्। घटमनुभवामि, पटमनुभवामीत्यनुवृत्तधात्वर्थः परतत्त्वरूपानुभूतिरिति स्वाभिमतिविरुद्धतया तस्या अहंशब्दार्थत्वायोगाच्च। एवमहंशब्दोऽहमर्थविशिष्टानुभूतिपरः

( अध्यासयुक्तिभङ्गः )

कुतश्चैष निश्चयः, अध्यस्तं ज्ञातृत्वमिति ? स्थूलोऽहमितिवत् देहात्माभिमानवतः प्रतिभासनादिति चेत् – नन्वात्मतयाऽभिमताऽनुभूतिरपि तद्वत एवावभातीति सापि तथा स्यात् ॥ तत्त्वज्ञानोदयात्परतोपि तदनुवृत्तेर्न तथा सेति चेत्–किं भोः ! तत्त्वज्ञानात्परम् अबोद्धैवायमात्मा ? हन्तैवं वरमितोऽतत्त्ववेदित्वम् ! भ्रान्त्यापि हि तत्र बहु भद्रं पश्यतीति । ( ज्ञातृत्वस्याहङ्कारस्थत्वशङ्का )

ननु ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं विक्रियात्मकं जडमहङ्कारग्रन्थिस्थम्। तत्फलभुक् अकर्ता अविक्रियः साक्षी प्रकाशमात्र आत्मा। कर्तृत्वादिर्हि दृश्यत्वात् रूपादिवन्नात्मधर्मः। कर्तृत्वे ह्यात्मनः, अहंप्रत्ययगोचरत्वेपि, देहस्येवानात्मत्वपरा[ग?]र्थत्वजडत्वादिप्रसंगो दुर्निवारः। दृष्टश्च लौकिकवैदिककर्मसु कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलभुजः प्रमातुरहम्प्रत्ययिनः पृथक्त्वम्। तथेहापि प्रमातुरहमर्थाद्विलक्षणस्साक्षी प्रत्यगात्मेति युक्तम् ॥ ( तत्र लोकानुभवविरोधप्रदर्शनम् )

नैवं युक्तम् ; अहं जानामीति ज्ञातृतया सिध्यतः प्रत्यगात्मनो व्यतिरेकेण साक्षिणो नाम प्रकाशमात्रस्यात्मनोऽनुपलब्धेः। देहेन्द्रिय-

---

तत्रानुभवामीत्यनुभूतिवैशिष्ट्यं भासमानं विशेष्यभूतायां धात्वर्थाभिन्नायामनुभूतौ बाधाद्विशेषणेऽहमर्थे पर्यवस्यतीत्यप्यनुभवविरोधादिना निरस्तमेव । 'अहंशब्दः प्रत्यग्वाची; तत्र प्रतीचि अनुभवामीति वास्तवमनुभावितृत्व' मित्येवानुभवात् ।

१. अध्यस्ता। २. नन्वहङ्कारस्य ज्ञातृत्वे तदतिरिक्त आत्मनि किं मानम् ? तत्राह तत्फलेति। 'पुरुषोस्ति भोक्तृभावात्'। 'पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यत' इति। ज्ञानस्यान्तःकरणवृत्तेर्व्यापारात्मनोऽहङ्कारस्थता । भोगस्सुखदुःखगोचरस्साक्षिप्रकाश इत्यात्मनो भोक्तृत्वम्। तत्फलभुगकर्तेति विवक्षितमनुमानं विवरिष्यति दृष्टश्चेत्यादिना। ज्ञानकर्ता स्वान्यभोक्तृविशिष्टः कर्तृत्वात् देहवदित्यनुमानम् ! अनात्मत्वं वा साध्यम्। अहमर्थे भोक्तृत्वमात्मसंबन्धबलादौपचारिकमिति पश्चान्निश्चीयत इति भावः । ३. आत्मनः कर्तृत्वेऽहम्प्रत्ययगोचरत्वे च सतीत्यर्थः। ४. साक्षी प्रत्यगात्मेति वदतः; प्रमातुरहमर्थाद्विलक्षण इत्यु-

मनःप्राणविज्ञानेभ्यो ज्ञानाश्रयतया विविच्यमाने प्रतीपमञ्चतीव निर्भासमानोऽहंभाव एव हि प्रत्यक्त्वं नाम; साक्षित्वमपि तस्य साक्षाज्ज्ञातृत्वम्। नह्यजानन् साक्षीत्यपदिश्यते। सर्वञ्च प्रकाशमानं ज्ञात्रेऽहमिति चकासते प्रकाशत इति प्रत्यात्मसिद्धोऽयमनुभवः, अहं जानामि, मह्यं प्रकाशत इति। ( अहङ्कारस्थत्वेऽनुपपत्तिः )

नचाव्याकृतपरिणामभेदस्याहंकारनाम्नो बुद्धिनामधेयस्य वा ज्ञातृत्वम् ,देहस्येवाचेतनत्वपरिणामि(मि?)त्वजडत्वपरार्थत्वादिहेतुभिस्तदनुपपत्तेः। ( छायापत्तिसंपर्काभ्यां ज्ञातृत्वारोप इत्यस्य भङ्गः )

न च चितिच्छायापत्त्या तयोस्तत्संभवः, अचाक्षुषस्यच्छायाऽदर्शनात्। न च ज्ञातृत्वं चितावपि ते वास्तवमस्ति, येन, अग्निसंपर्कात् अयःपिण्ड इवौष्ण्यम् ,तत्संपर्कादर्थान्तरे ज्ञातृत्वं जायेत, ज्ञायेत वा॥

---

क्तिर्व्याहतेत्याह देहेति। इवेत्युक्तिरञ्चुधातुमुख्यार्थाविवक्षासूचनाय।
१. न हि कर्ता साक्षीति व्यपदिश्यत इति परे। तन्न—नह्याक्षिप्ताकर्तृत्वरूपार्थरक्षणाय द्रष्टृरूपवाच्यार्थत्यागः; दर्शनकर्तैव च साक्षिशब्दवाच्य इति। २. शत्रन्तं चतुर्थ्यन्तम्। ३. देहदृष्टान्तादिस्त्वदुक्तस्त्वदनिष्टसाधक इत्याह नचेति। अहमर्थः किं महत्तत्त्वरूपा बुद्धिः, तज्जन्योऽहङ्कारो वा, बुद्ध्यहङ्कारशब्दवाच्यमन्यन्मनस्तत्त्वं वा; सर्वथाऽव्याकृतपरिणामत्वान्न ज्ञातृत्वमिति॥ ४. ननु साङ्ख्यरीत्या वृत्त्याश्रयत्वरूपं ज्ञातृत्वं प्रकृतिपरिणामे नानुपपन्नम्। एवमपि नित्यचैतन्यस्यैव ज्ञाधात्वाद्युपात्ततया अस्मदभिमतत्वात् ज्ञानानुभूत्यादिशब्दमुख्यार्थाश्रयत्वमनुभवसिद्धं कथं निर्वाह्यमिति प्रश्नः। तत्र चिच्छायापत्त्या वा चित्संपर्केण वा चिद्व्यञ्जकतया वा चिदाश्रयत्वभ्रान्तिरिति समाधिरिति शङ्कां क्रमेण क्षिपति नचेत्यादिना। तयोः—अहङ्कारे बुद्धौ च। यद्वा चिदहङ्कारयोः। अहङ्कारे छायापत्त्या ज्ञातृत्वम्। अथ तस्य चित्यप्यध्यास इति भावः। ५. छाया प्रतिबिम्बः। चैतन्येऽहङ्कारः प्रतिबिम्बितः। अतो दर्पणस्थमालिन्यस्य मुख इवाहङ्कारे तत्प्रतीतिः; यद्वा चैतन्यमहङ्कारे प्रतिबिम्बितम्। तेन जले चन्द्रवत्त्वस्येवाहङ्कारे चिदाश्रयत्वस्य प्रतीतिरितीदमुभयमपि न भवतीति। ६. सम्पर्कपक्षं खण्डयति।

( अहङ्कारस्य व्यञ्जकत्वात् ज्ञातृत्वभ्रम इति शङ्का )

यद्युच्येत[1]—ज्ञप्तिमात्रमेवात्मानमभिव्यञ्जन्नचेतनोऽप्यहंकारः स्वाश्रयतया[2] तमभिव्यनक्ति। स्वभावो ह्ययं व्यञ्जकानाम्, यत् आत्मस्थतयाऽभिव्यङ्ग्यमभिव्यञ्जन्ति, दर्पण—जल—खण्ड मुण्डादय इव मुख—मिहिराबिम्ब—गोत्वादीन। तत्कृतश्चायम्, अहं जानामीति भ्रमः। अत एव[3] खल्वहमुल्लेखविगमे सुषुप्तिमुक्त्योःस्वाभाविकविशदानुभवमात्ररूपेणात्मनः प्रकाशः, तत एवचानात्मत्वमहमर्थस्य[4]। तथाच सौरेशं वचः—

'आत्मनश्चेदहं धर्मो यायान्मुक्तिसुषुप्तयोः।
यतो नान्वेति तेनायमन्यदीयो भवेदहम्'॥( नै. २·३२ )इति—

( तत्परिहारः )

तदिदमसंबद्धम्[5], यतः—

शान्ताङ्गार इवाऽऽदित्यमहङ्कारो जडात्मकः।
स्वयञ्ज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्॥ ११॥

आत्मत्वाभिमताजडानुभवाधीना[6] हि सर्वपदार्थाभिव्यक्तयोऽभिप्रेयन्ते। तादृशमशेषार्थसाधकमुदयास्तमयाविपरिवृत्तिशून्यप्रकाशस्वभावं त मनुभवं तदधीनसिद्धिरचिदहंकारोऽभिव्यनक्तीत्युपहास्यमिदमात्मविदाम्।

---

१. व्यञ्जकत्वपक्षं शङ्कते। २. स्वाश्रयकतया! ३. व्यञ्जकत्वकृतत्वादेवेत्यर्थः। व्यञ्जकविलयादिति शेषः। ४. अहम्—अहन्त्वम्। सुषुप्तेति भावे क्तः। भवेदित्यस्यायमिति कर्ता; अतः प्रथमपुरुषः। ५. अहङ्कारस्य चैतन्यव्यञ्जकत्वाच्चैतन्येऽहङ्कारवृत्तित्वभ्रम इत्युच्यते। तत्र व्यञ्जकत्वं, व्यक्तिस्वरूपं, व्यञ्जकत्वस्य तादृशभ्रमनियामकत्वं, सुषुप्तावहमुल्लेखविगम इत्यादि सर्वं दुर्वचमिति। ६. ननु जडस्यापि दर्पणगोवृतादेर्मुखकुङ्कुमगन्धादिव्यञ्जकत्वं दृष्टम्; प्रकाशरूपादित्यादेश्चक्षुर्व्यङ्ग्यत्वञ्च। अतः कथमयुक्तिरित्यत्र दृष्टान्तद्वयोत्थं विशदयति आत्मत्वेति। अहङ्कारो नानुभूतिव्यञ्जकः तद्व्यङ्ग्यत्वात् अङ्गारवत्, अनुभूतिर्नाहङ्कारव्यङ्ग्या तन्निरपेक्षप्रकाशत्वादिति प्रयोगद्वयं विवक्षितम्।

किञ्च – व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे ॥ १२ ॥

दिनकरकरव्यङ्ग्यकरतलं तदभिव्यञ्जकं दृष्टमिति मा वोचः, करतलस्य तद्बाहुल्यमात्रहेतुत्वात् । तथाभूताश्च दिनकरमरीचयः स्फुटमुपलभ्यन्त इति न करतलव्यङ्ग्यत्वम् ॥

(अहङ्कारकृताभिव्यक्तेस्त्रेधा विकल्प्य निरासः)

अपिच केयमभिव्यक्तिः, याऽनुभूतिरूपस्यात्मनोऽहङ्कारेण क्रि-

---

१. ननूपकार्योपकर्तृभाव स्तव्यस्तोतृभावादिकमिव व्यङ्क्तृव्यङ्ग्यभावोपि मिथः किं न भवति ? न खल्वादित्याङ्गारस्थलेऽदर्शनमात्रेण निषेधसंभवः ! एवं सिद्धान्ते निरपेक्षप्रकाशस्यात्मादेर्ज्ञानादिव्यङ्ग्यत्वस्यापि स्वीकारात्कथं व्यङ्ग्यत्वनिषेधोपीति हेत्वोरप्रयोजकत्वशङ्कायां प्रयोगद्वयमर्धद्वयेन समर्थ्यते । **प्रातिकूल्यतः**– विरुद्धत्वात् । अत्र यादृशं व्यञ्जकत्वं व्यङ्ग्यत्वञ्च विवक्षितम् , तादृशं मिथोविरुद्धम् । अन्योन्यव्यङ्क्तृव्यङ्ग्यत्वे सति यत्र परस्परव्यक्त्यधीनव्यक्तिकत्वप्रसक्तिः, तत्रान्योन्याश्रयदोषात् । तथाहि — व्यञ्जकं हि व्यक्तिकारणं व्यक्तेः प्रागावश्यकम् । तत्र यद्यहङ्कारः स्वरूपसन्नेवानुभूतिव्यञ्जकः, तर्ह्यहमुल्लेखाभावात् तत्स्थतयाऽनुभूतिग्रहणमिष्टं न सिध्येत्; अहमर्थस्य यावत्सत्त्वं साक्षिभास्यत्वसिद्धान्तभङ्गश्च । अतोऽहङ्कारो व्यक्तस्सन्ननुभूतिव्यञ्जको वाच्यः। तथाऽनुभूतिरप्यहङ्कारव्यक्तेः हेतुरव्यक्ता पूर्वं न स्थातुमर्हति, प्रकाशस्वभावत्वात्। नाप्यहङ्कारं विना व्यक्ता, तथासति तस्याहेतुत्वापत्तेः । अतो व्यक्तयोः परस्परपूर्वकत्वमिति । अतोऽनुभूतेर्व्यञ्जकत्वमात्रम् , अहङ्कारस्य व्यङ्ग्यत्वमात्रमिति प्रकृतप्रथमहेतोः प्रकृताविवक्षितव्यञ्जकत्वविरुद्धत्वात्प्रकृतसाध्यव्याप्यत्वमक्षतम् । द्वितीयानुमानमपि त्वन्मतानुसारेण प्रयुक्तं त्वया दुर्निषेधम् ; एवमनिष्टस्यैवापादनादिति । यद्वा प्रथमकारिकायाम् अहङ्कारो न प्रकाशव्यञ्जकोऽप्रकाशत्वात्, संविन्न जडव्यङ्ग्या प्रकाशत्वादिति सामान्यतो विवक्षितम् । पूर्वोक्तानुमानद्वयं तूत्तरकारिकायाम् । पूर्वव्याख्याने 'तमनुभवं तदधीनसिद्धि'रिति वाक्यस्वारस्यम् ; द्वितीये 'किञ्चे'त्युत्तरत्रारम्भस्वारस्यम् ।

यत इत्युच्यते? न तावत्तत्सिद्धिः;[1] तस्य स्वतस्सिद्धत्वेनानन्याधीनसिद्धित्वाभ्युपगमात्। नापि तद्विषयज्ञानम्, ज्ञानान्तराननुभाव्यत्वात्। अनुभाव्यत्वे हि घटादिवदननुभूतित्वप्रसङ्गः। अत एव[2] न ज्ञानकरणानुग्रहः। (तत्र तृतीयविकल्पस्य त्रेधा विकल्प्यापि निरासः)

स[3] हि वेद्यगतज्ञानोदयप्रतिबन्धकापनयनेन वा, दीपेनेव सन्तमसनिरसनेन चक्षुषः; वेद्यसन्निकर्षोपाधित्वेन वा, व्यक्तिदर्पणादेरिव जाति – निजमुखादिबोधकस्य नयनादेः; वेत्तृ[4] (बोद्धृ?) (वेदितृ?) गतकलङ्कक्षालनेन वा, शमदमादिनेव परावरात्मतत्त्वज्ञानोपायस्याऽऽगमादेः। न तावदनुभवगतमहङ्कारापनेयमस्ति किंचित् ज्ञानोदयपरिपन्थि। (1) अज्ञानं तु ज्ञानसमानाश्रयविषयतया न तदुभयभावविरहिणि[5] भवदभिमतसाक्षिणि निक्षेपमर्हति। न खलु ज्ञानप्रसक्तिशून्यो घटादिरज्ञानीत्युच्यते। तथैव न जातुचिज्ज्ञातृत्वं ज्ञानमात्रस्येति न तस्याप्यज्ञानं भवेत्। (2) भवदपि तत् अहङ्कारापनेयं नेष्यते, ज्ञानैकनिवर्त्यत्वादज्ञानस्य; तथाऽभ्युपगमाच्च (3) ज्ञानञ्च स्वविषय एवाज्ञानं निवर्तयति। न च तद्विषयत्वमात्मतयाऽभिमतस्यानुभवस्येष्यत इति तत्रत्यमज्ञानं न केनचित्कदाचिदुच्छिद्येत। (4) ज्ञानप्रागभावरूपञ्चाज्ञानं न ज्ञा-

१. उत्पत्तिः। २. तद्विषयकज्ञानाभावादेव। ३. तद्विषयकज्ञानमस्ति नवेत्यस्त्वेतत्। करणानुग्रहोऽपि प्रकृते दुर्वच इत्याह। चक्षुष इत्यादौ अनुग्रह इति विभज्यानुषङ्गः। ४. मुख्यो गौणो वा ज्ञातरि वेत्तृशब्दश्शास्त्रदीपिकादावात्मवादे। अत्र तु वेदितृशब्द एव सर्वत्र। एतत्स्थलीयभाष्यानुसारे तु बोद्धृशब्दः। ५. ज्ञानाश्रयत्वज्ञानविषयत्वरहिते।

वेद्यगत ज्ञानोदयप्रतिबन्धकेत्यनेनाज्ञानग्रहणे (1) तस्य वेद्यगतत्वं तद्वृत्तित्वरूपं तद्विषयकत्वरूपं वा नास्ति, (2) अज्ञानस्याहङ्कारापनेयत्वमपि नास्ति, (3) अनुभवगतस्य तस्योच्छेद्यत्वमपि त्वन्मते न भवति, (4) अज्ञानमभिमतं प्रतिबन्धकमपि न भवतीत्येवं वेद्ये किञ्चित्कारमुखेनानुग्रहरूपं प्रथमाशिरः खण्डयित्वा, वित्तिकरणे वेदितरि वा किञ्चित्कारमुखेनेति शिरोद्वयं शिष्टमर्धद्वयेन खण्डयति कर-

नोत्पत्तिप्रतिबन्धकमिति शक्यं व्यपदेष्टुम् । भावरूपमज्ञानमनिर्वचनीयं जगदुपादानमित्यादि प्रलापमात्रमिति संबन्धनिरूपणे प्रतिपादयिष्यते। अतो न वेद्यदोषापनयनरूपा अहङ्कारेणानुभवाभिव्यक्तिः ॥

करणानामभूमित्वान्न तत्संबन्धहेतुता ।
अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते ॥ १३ ॥

( व्यञ्जकस्य स्वनिष्ठतया व्यङ्ग्यप्रकाशनस्वभावविरहः )

न च स्वाश्रयतयाऽभिव्यङ्ग्यप्रकाशनमभिव्यञ्जयितुः स्वभावः; प्रदीपादावदर्शनात् । यथावस्थितवस्तुप्रकाशानुकूलस्वभावत्वाच्च ज्ञानतत्साधनतदनुग्राहकाणाम् । तच्च स्वतःप्रामाण्यन्यायात्, तदनभ्युपगमे च सर्वत्रानाश्वासप्रसङ्गात् ॥ व्यक्तेस्तु जातिराकार एवेति तथा प्रत्यायनम्; न व्यञ्जकत्वप्रयुक्तम्, उक्तादेव व्यभिचारात् । दर्पणादिस्तु नायनमहःप्रतिफलनलक्षणदोषहेतुर्नाभिव्यञ्जको वदनादेः। व्यञ्जकस्त्वालोकादिरेव । व्यञ्जकत्वेपि प्रतीपगमनदोषप्रयुक्तस्तत्रान्यथाऽवभासः। नचेह तथाऽहमर्थस्य तादृशदोषापादकत्वं स्वभावः; तथासति सर्वस्यपि प्रत्यक्षादेरप्रामाण्यप्रसंगान्न किञ्चित्तथ्यं स्यात् ॥

तस्माज्ज्ञातृतया सिध्यन्नहमर्थ एव प्रत्यगात्मा, न ज्ञप्तिमात्रम् ॥

( सौरेशवचोर्थदूषणम् — सुषुप्तावहमर्थस्यैव भानम् )

यत्तु — सुषुप्तिमुक्त्योर्ज्ञप्तिमात्रतया स्फुरणम्; अहमिति तु न प्रतिभातीति— तत्र सुषुप्तौ तथावस्थितिः पुरस्तादेव निरस्ता । अहमित्येकरूपेणाऽऽप्रबोधात्तत्राप्यात्मनस्स्फुरणात् । यदिपरं परागर्थानु-

---

णानामिति । करणानामभूमित्वात् = अनुभूतेरिन्द्रियासंबन्धित्वात् । **अहमर्थस्येति** काकाक्षिन्यायात्प्रागप्यन्वेति ! **तेनैवेति** । स्वस्वरूपस्यैव स्वकल्मषप्रतिभटत्वे कल्मषप्रसक्त्यभावादिति । १. पुटदर्शितविप्रतिपत्तिविषयनिरूपणावसरे ? ;

२. अद्वैतज्ञानमप्यप्रमा स्यात् । ३. अहमर्थस्याहङ्कारत्वे तत्र देहवद्वास्तवज्ञातृत्वायोगस्य, छायापत्त्या संपर्केण वा ज्ञातृत्वाध्यासायोगस्य च पूर्वमिव, इदानीं व्यञ्जकत्वाधीनज्ञातृत्वाध्यासायोगस्य चोक्तत्वात् । ४. पु०. ३१. । ५. सुषुप्तिगतं वैलक्षण्यं दर्शयति । **यदिपरमिति** समुदितं 'परन्तु' पर्यायक-

भवाच्चमोगुणाभिभवाच्च न विविच्य स्फुटं चकास्ति। भवदभिमतानुभूतिरपि तदानीं तथैव हि प्रथत इति वाच्यम्; नाहमहं (नाहम् ?), नाप्यर्थान्तरम्, अपितु अनुभूतिमात्रमज्ञानसाक्षितयाऽवतिष्ठत इत्येवंविधं स्वापसमयभवमनुभवं न हि सुप्तोत्थितः कश्चित्परामृशन्नुपलब्धचरः॥ 'एतावन्तं कालं न किञ्चिदहमवेदिष' मिति परामर्शनादेव तथात्वं लभ्यत इति चेत्–कथमिव? न किञ्चिदिति निर्देशादिति चेत्–नन्वेवमनुभूतिप्रतिभासोपि प्रत्याख्यातस्स्यात्।

(उक्तपरामर्शस्य विपरीतसाधकत्वम्)

अपिच सुषुप्तिसमयसिद्धमात्मानमहमिति परामृश्य, 'न किञ्चिदवेदिष' मिति तस्य वेदने प्रतिषिध्यमाने तात्कालिकीं वित्तिसिद्धिम् अहमर्थस्य चासिद्धिमभिदधानोऽनुभवविरोधमपि न जानाति देवानांप्रियः। निर्विषया निराश्रया च वित्तिर्नास्तीत्युक्तमेव;

(अहमर्थप्रकाशबाधकपरामर्शान्तरनिर्वाहः)

ननु मामप्यहं न ज्ञातवान् प्रसुप्त इत्यस्ति हि प्रबोधे प्रत्ययः। सत्यम्, स तु वर्णाश्रमादिविशिष्टतया प्रबोधसमयसंवेद्यमानं देहिनं मामित्यादाय स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानाहमर्थस्य तेन रूपेणाज्ञातत्वं प्रज्ञापयति, न पुनर्ज्ञस्वभावस्याहमर्थस्यापि। एवमिव खल्वयमनुभवः, 'अत्र सुप्तोऽहमीदृशश्चेत्येवं मामपि न ज्ञातवानह' मिति॥ (परोक्तिशोधनेपि सुषुप्तावहमर्थसत्ताप्रकाशयोरवर्ज्यत्वम्)

अपिचात्मा सुषुप्तावज्ञानसाक्षित्वेनास्ते इति हि यौष्माकी स्थि-

---

रूपम्। अतोऽत्र तर्हीत्येवं वाक्यापेक्षा नास्ति। यदि विशेषो विमृश्यः, तर्हि वक्ष्यमाणं परमस्तीति **यदिपर**मित्यस्यार्थः। इयं प्राचीनप्रयोगसरणिर्न्यायसिद्धाञ्जनेऽपि जडद्रव्यपरिच्छेदे (५७) 'यदिपरं तन्निमित्तत्वमात्रं महत्'इति। १. अस्फुटतया। २. त्वदुक्तज्ञानस्याश्रयापेक्षत्वात्संमन्तव्यस्य, अतएव प्रभातुल्यप्रकाशाश्रयत्वात्स्वयंप्रकाशस्य। वक्ष्यति च, 'चैतन्यस्वभावतया स्वयञ्ज्योतिष्ट्वा' दिति। अतएव 'चैतन्यस्वभावता हि स्वयम्प्रकाशते' ति भाष्यं चैतन्यस्वभावत्वात्स्व-

तिः । साक्षित्वञ्च साक्षाज्ज्ञातृत्वमित्युक्तम् । सचायं *'जानामी'ति प्रतिभासमानोऽस्मदर्थ एवेति कथमिव तदानीमहमर्थो न प्रथेत, स्वस्मै स्वयंप्रकाशमानोऽहमित्येव हि प्रकाशत इति ॥

तत्सिद्धं स्वापादिदशास्वपि आत्मा प्रकाशमानोऽहमित्येव प्रकाशत इति ॥ (मुक्तावहमर्थसमर्थनम्)

यत्तु – मुक्तावहमर्थो नोपावर्तत इति–तद्वार्तम्, यतस्तथासति वैनाशिकदर्शन[1] इवात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातस्स्यात् । नो खल्वहमिति[2] धर्ममात्रम्; येन तदपगमेऽप्यविद्यानिवृत्त्यामिवात्मनः स्वरूपेणा[3]वतिष्ठत इत्युच्यते (च्येत?) । अहमित्येव हि तस्य स्वरूपम् । ज्ञानमपि हि तद्धर्मत्वेन तस्यैव प्रकाशते, 'ज्ञानं मे जात'मिति । का[4] कथा पुनरर्थान्तरस्यात्मत्वे ?

(मोक्षशास्त्रमुमुक्षुप्रवृत्तिबलतोऽपि मोक्षेऽहमर्थसत्त्वम्)

अन्यच्च[5] – यस्सांसारिकदुःखैर्दुःखित्वेनात्मानं तत्त्वतो भा-

---

यम्प्रकाशतेति व्याख्यातम् । * साक्षित्वं ज्ञानवत्त्वम् । न च ज्ञानमप्रकाशमानम्, आश्रयं विना प्रकाशमानं चेति । नन्वज्ञानसाक्षित्वम् 'अहमज्ञानं जानामी'त्येवंरूपं नेष्यते, किन्तु 'न जानामी'त्येवंरूपमिति चेत् – एवमपि जानामीत्युत्तमपुरुषेणास्मदर्थप्रकाशो दर्शित एवेति । १. क्षणिकज्ञानसंतत्युच्छेदो मोक्ष इति बौद्धमते । २. नन्वात्मन्यविद्याया इवाहमर्थस्याप्यध्यस्तत्वादध्यस्तनाशेऽप्यधिष्ठानभूतात्मास्थितिरपवर्गे निर्बाधेति शङ्कां क्षिपति नो इति । धर्ममात्रमिति ! अविद्यापि नाध्यस्ता, किन्त्वात्मधर्मः । अहमर्थस्तु न धर्मोऽपि । अतो 'धर्मनाशेऽपि धर्मिस्थिति'रिति रीतिरपि न भवतीति । ३. 'आत्मा स्वरूपेणे' ति वा, आत्मनस्स्वरूपमिति वा, आत्मन इत्यस्याविद्यानिवृत्त्यामित्यत्रान्वयविवक्षया, 'अविद्यानिवृत्त्यामिवात्मनः, आत्मा स्वरूपेणे' ति वा पाठस्स्यात् । अन्यथा 'आत्मे' त्यध्याहारस्स्यात् । ४. ज्ञानस्यावस्थितिरेव तदाऽहमर्थनाशे न सिध्यतीति स्थिते कुतस्तस्याहमर्थभिन्नस्यात्मत्वप्रसक्तिरिति । ५. 'यद्यात्मधर्मोऽहङ्कारो नित्यत्वं तस्य बोधवत् । नित्यत्वे मोक्षशास्त्राणां वैयर्थ्यं प्राप्नुयाद्ध्रुव' मिति सौरेशोक्तदोषस्तस्यैवेत्याभिसंधायाह ।

न्त्या वा प्रत्येति, दुःख्यहमिति, सः, 'सर्वमिदमनिष्टजातं कथमहमपुनरुदयमपनुद्यान्याकुलः(लं) स्वस्थो भूयासमिति संजातमुमुक्षुस्तत्साधने प्रवर्तते । स यदि, 'साधनानुष्ठानादहमेव न भविष्यामी'त्यवगच्छति, अपगच्छेदसौ मोक्षकथाप्रसङ्गादपि । ततश्चासंभवदधिकारितया सर्व एव वेदान्तविषयः, सर्वाणि च मोक्षशास्त्राणि प्रामाण्यादेव प्रच्यवेरन्॥ अहमुपलक्षितः प्रकाशोऽपवर्गेऽवस्थास्यत इति चेत् — किमतः? न हि मयि नष्टेऽपि कोऽपि प्रकाशः स्थास्यतीति कश्चित्प्रेक्षावान् प्रयस्यति॥

(अहमर्थस्य युष्मदर्थत्वभङ्गः)

एतेन[1] (एतेनै?) तदपि परास्तम्, 'अस्मत्प्रत्यये योऽनिदमंशश्चिदेकरसः प्रकाशः, स आत्मा। तस्मिंस्तद्बलनिर्भासिततया लक्षणतो युष्मदर्थ एवाहं जानामीति सिध्यन्नर्थ' इति। प्रत्यक्षाविरोधात् — अहं जानामीति सिध्यंश्चेतनो युष्मदर्थ इति माता वन्ध्येतिवद्व्याहतार्थं वचः। नचासावन्याधीनावभासः; चैतन्यस्वभावतया स्वयंज्योतिष्ट्वात्। प्रकाशश्च प्रकाशत्वादेव कस्यचिद्भवेत् दीपादिप्रकाशवदिति नात्मा भवितुमर्हति। अतो ज्ञातृतयाऽहमिति सिध्यन्नर्थ एवात्मा।

(मुक्त्यहन्त्वसाधकन्यायः)

स च मुक्तावप्यात्मनेऽहमित्येव प्रकाशते, स्वस्मै प्रकाशमान-

१. मुक्तावहमर्थानुवृत्तेरावश्यकत्वेन । २. अहमिति प्रतीतावहङ्कारोऽनुभूतिश्चेति द्वयं भासते। तत्रानुभूतिश्चिद्रूपा स्वयंप्रकाशतया प्रत्यग्रूपोंशः पराग्रूपेदमंशादन्या। ३. चिदधीनप्रकाशतया। लक्षणतः पराधीनप्रकाशत्वरूपपराग्लक्षणवत्तया। अहम्प्रतीतिगोचरत्वाहंशब्दार्थत्वयोस्सत्त्वेपि सोऽर्थो लक्षणतो युष्मदर्थ एव, इदमंश एव, परागर्थ एवेति। सिध्यन् — ज्ञातृत्वेन सिध्यन्। ४. उत्तरेणैकवाक्यमिदम्। यद्वा यथाभाष्यमत्र वाक्यच्छेदः; ५. अहमर्थः। ६. स्वयंप्रकाशत्वात्। ननु प्रकाशतदाश्रययोस्स्वप्रकाशत्वे उभयोः प्रत्यक्त्वापत्तिः। नैवम्, अहन्त्वस्यैव प्रत्यक्त्वरूपतया केवलप्रकाशे तदप्रसक्तेरिति।

७. अन्वयिव्यतिरेकिपञ्चावयवन्यायेन मुक्तावहन्त्वानुवृत्तिकथनमुखेनाहन्त्व-

त्वात् । योयः स्वस्मै प्रकाशते, स सर्वोऽहमित्येव प्रकाशमानो दृष्टः; यथा तथाप्रकाशमानत्वेनोभयवादिसम्मतस्संसार्यात्मा । यः पुनरहमिति न चकास्ति, नासौ स्वस्मै प्रकाशते; यथा घटादिः । स्वस्मै प्रकाशते चायं मुक्तात्मा । तस्मात्सः अहमित्येव प्रकाशते ।

( अहन्त्वप्रकाशस्योपाधिकृतत्व भङ्गः )

नचैवं[2] प्रकाशमानत्वे मुक्तस्याज्ञानित्वसंसारित्वादिप्रसङ्गः आपादनीयः, मुक्तत्वाविरोधात् ; अतदुपाधित्वाच्च तत्प्रत्ययस्य । नह्यज्ञानोपाधिरहंप्रत्ययः, ब्रह्मात्मापरोक्षज्ञानक्षपितनिरवशेषाविद्यानामपि वामदेवा[3]दीना मतत्प्र ( महम्प्र ? ) त्ययदर्शनात् । श्रूयते हि – 'तद्धैतत्पश्यन ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च', 'अहमेव च (मेकः प्रथममासं ?) वर्तामि [च] भविष्यामी'त्यादि । तथा कथंचिदप्यविद्या[4]दिक्लेशै[5]र्लेशतोपि जातुचिदपरामृष्टस्य परमपुरुषस्याप्यहमित्यात्मपरामर्शः प्रज्ञायते, 'हन्ताहमिमास्तिस्रो देवताः', 'बहु स्यां प्रजायेय', 'स ईक्षत लोकान्नु सृजै' इति, तथा 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' 'तेषामहं समुद्धर्ता', 'अहं बीजप्रदः पिता', 'वेदाहं समतीतानि'इत्येवमादिभिः ॥ ( अनात्मगोचराहङ्कारशब्दस्यान्यथानिर्वाहः )

एवञ्च[6] साक्षादहमर्थादात्मनो विलक्षणेऽपि देहे येनाऽऽव्यक्तिक-

---

रूपप्रत्यक्त्वस्य स्वरूपं विवृणोति । स्वस्मै प्रकाशमानत्वं प्रत्यक्त्वम् ; पराक्त्वञ्च परस्मै भासमानत्वमिति शिक्षितं भवति । १. आदिना ज्ञानस्यापि परिग्रहः । २.अहमिति प्रकाशमानत्वे । ३.वामदेवशब्दोऽत्र महर्षिं महादेवञ्चाभिप्रेत्य । आदिशब्देन वा रुद्रग्रहणम् । ४.ऋषिमध्ये वामदेवानुसन्धानं बृहदारण्यकवाक्येन प्रदर्श्य, देवमध्ये सर्वज्ञस्य वामदेवस्य महादेवस्यानुसन्धानमप्यथर्वशिरोवाक्येन दर्शयति । अत्र तत्त्वटीकायाम्, 'अथर्वशिरसोऽप्येवमेव निर्वाहो वेदार्थसंग्रहे स्थापित' इति वाक्यम्, अहमेवेत्यादेरथर्वशिरोवाक्यत्वस्य तत्र भगवद्भाष्यकृत्संमतेश्च सूचनायेति ज्ञायते । ५. अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ( यो. सू. ) ६.'महाभूतान्यहङ्कार इत्येतत्क्षेत्रमुच्यत'(२-४३)इतिसौरेशकटाक्षेणाह एवञ्चेति।

परिणामभेदेनाहमिति भ्रमः, तदभिप्रायोऽहंकारस्य क्षेत्रान्तर्भावोपदेशो भगवतः, 'महाभूतान्यहङ्कार' इति । बहुमन्तव्यजनावधीरणहेतुश्चासौ गर्वापरपर्यायस्तत्रतत्र शास्त्रेषु प्रायशो हेयतयोपदिश्यते।

(आत्मनोऽहमर्थत्व एवाविद्यानिर्वाहसंभवः)

तस्मादहमिति मतिर्बाधकापेता साक्षादात्मगोचरैव ; अनात्मनि तु शरीरे भवन्ती अविद्येति युक्तम् । उक्तञ्च– 'श्रूयताञ्चाप्य (तच्छ्रूयताम?) विद्यायाः स्वरूपं कुलनन्दन । अनात्मन्यात्मबुद्धिर्या' इति महर्षिणा वासिष्ठनन्दनेन । न च ज्ञप्तिमात्रप्रतिभासः कस्यचिच्छरीरेऽस्ति, येन तन्मात्रात्मवादिनोऽप्यनात्मबुद्धिरुपपद्येत ॥

अतः[1] प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताहमिति भासते ॥ १४ ॥

---

आत्मन एवाहन्त्वे स्वतएव सर्वदाऽहमिति भासमानत्वे च सतीत्यर्थः । अहङ्कारशब्दे भावे करणे च घञ् । कृञर्थश्च प्रकृते ज्ञानक्रिया । तथाच अहंबुद्धिस्तत्करणञ्च तदर्थः । तत्राऽऽत्मन्यहम्बुद्धिस्तात्त्विकी । तदभिप्रायेण क्वचित्प्रयोगः। यथा, 'अथातोऽहङ्कारादेश' इति । अनहमर्थेऽहमिति बुद्धिरप्यहङ्कारः । अयमेव देहादावात्मभ्रम इत्युच्यते । अयं सर्वप्राणिसाधारणः । अयमेव यदा प्रशस्तदेहादिविषयकात्मभ्रमरूपो भवति, तदा गर्व इत्युच्यते । आत्मगुणादिभिरुत्कृष्टस्य जनस्य यत् देहादि, ततस्स्वदेहादौ प्राशस्त्यमभिमत्य देहात्मभ्रमवशादात्मानमेव तादृशप्राशस्त्यविशिष्टतया गृह्णन् हि परात्मनस्तदभावमाकलय्य तमवधीरयतीति । 'अहङ्कारं बलं दर्प' मित्यादौ बलदर्पादिसाहचर्यादयमेव गुणविशेषो हेयत्वेनोपदिष्ट इति ज्ञायते। आत्मन्यहम्बुद्धेस्स्वतःसिद्धत्वान्न तत्र करणापेक्षा । करणघञन्तस्त्वहङ्कारशब्दोऽनहमर्थे देहादावहम्बुद्धिकरणे क्षेत्रज्ञार्थचतुर्विंशतिक्षेत्रतत्त्वान्तर्गतेऽहङ्कारतत्त्वे प्रवर्तत इति तस्य क्षेत्रान्तर्भावोपपत्तिरिति । १. अद्वैतिमतदूषणं निगमयति अत इति । अत्र संविदनित्यत्वसाश्रयत्वादि निरूप्य, बौद्धमत इवैतन्मतेऽपि प्रत्यभिज्ञानुपपत्तिं प्रस्तुत्य, 'अहज्ञानामी' ति प्रत्यक्षं न ज्ञप्तौ ज्ञातृत्वभ्रमरूपम्; नाप्यन्तःकरणे वस्तुतो भ्रान्त्या वा ज्ञातृत्वसंभवः, अतो ज्ञा-

( संविदात्मत्वसाधकाजडत्वहेतुभङ्गः )

**यदुक्तमजडत्वाद्वित्तिरेवात्मेति—तत्रेदं वाच्यम् – किमिदमजडत्वं नामेति । यद्युच्येत – सदपि यन्न प्रकाशते, तज्जडम् ; तद्विपरीतमव्यभिचरितप्रकाशसत्ताकमजडमिति–तथासति सुखादिभिर्व्यभिचारी हेतुः । न खलु सुखदुःखेच्छादयो विद्यमाना अपि कदाचिदनवभासमाना भवन्ति।। स्वसत्ताप्रयुक्तप्रकाशत्वमपि दीपादिभिरनैकान्तिकम् ; ज्ञानव्यतिरिक्तप्रकाशानङ्गीकाराच्चासिद्धता, विरुद्धता च।। यदि मतम् – अव्यभिचरितप्रकाशोपि सुखादिरन्यस्मै प्रकाशत इति घट इव जडतां**

---

नाऽहमर्थ एवात्मा, न ज्ञप्तिमात्र ' मिति वर्णनेन आत्मनि ज्ञातृत्वाहन्त्वयोः प्रत्यक्षसिद्धिर्दर्शिता । अथ सुषुप्तौ मुक्तौ चाहमर्थस्फुरणोपपादने प्रवृत्य, अन्यथा वैनाशिकमताविशेषः, मोक्षशास्त्रमुमुक्षुप्रवृत्तिवैयर्थ्यश्चेति तर्कमुक्त्वा, आत्मनि स्वस्मै भासमनत्वेन सर्वदाऽहमिति भानं साधयतः पञ्चावयवन्यायस्य कथनादहम्भाने न्यायोऽप्युक्तः । एवमहम्भाने वामदेवादिविषय आगमोप्युक्तः । ज्ञातृत्वविषयेत्वागम उपरिष्टाद्वक्ष्यते । **अविद्यायोगो** नाम अविद्याया अनात्मनि देहादावात्मभ्रान्तेर्योग उपपत्तिः । यद्वा तस्या अयोगोऽनुपपत्तिः; आत्मनि वस्तुतोऽहन्त्वसत्त्व एव स्थूलोहमित्यहम्भ्रमस्यात्मभ्रमत्वोपपत्तिः; तत्र वस्तुतस्तदसत्त्वे, च तस्य तद्भ्रमत्वायोग इति । अयमनन्तरमेवोक्त इति । १. एवं विशिष्य प्रच्छन्नबाह्यमतं निरस्य प्रकटप्रच्छन्नसाधारण्येन प्रथममनूदिते संविदात्मवादे शिष्टं खण्डनं वर्तयिष्यन् तद्वादारम्भोक्तमजडत्वहेतुमाभासीकरणायानुवदति । २. अव्यभिचरितः प्रकाशो यस्यास्सा सत्ता अव्यभिचरितप्रकाशा । अत्र स्वसत्ताव्यापकप्रकाशवत्त्वं, स्वसत्ताप्रयुक्तप्रकाशवत्त्वं, स्वस्मैभासमानत्वमिति पक्षत्रये मध्यमपक्षः प्रथमपक्षत्वेन भाष्ये आदृतः, औचित्यविशेषात् । ३. संविदात्मा स्वसत्ताप्रयुक्तप्रकाशवत्त्वादित्यत्र, स्वमते अहमर्थे आत्मत्वसद्भावात्साध्यतदभावसाधारणतया हेतुरनैकान्तिकस्स्वमतरीत्या । परेण संविदतिरिक्तस्य सर्वस्यानात्मत्वस्वीकाराद्धेतुस्साध्याभावैकसमानाधिकरण इति तद्रीत्या विरुद्धत्वम् । तेन प्रकाशरूपधर्मास्वीकारात्प्रकाशवत्त्वरूपहेतोरसिद्धिश्चेति ।

नातिवर्तते; तेनानात्मेति – ज्ञानं वा किं स्वस्मै प्रकाशते? अन्यस्यैव हि तदपि जानतोऽहमर्थस्य प्रथते, अहं जानामीति, अहं सुखीतिवत्। तेन स्वस्मै प्रकाशमानत्वमभिप्रेत्य प्रयुज्यमानोऽजडत्वहेतुरसिद्धस्संविदि। अतस्सत्त्यैव स्वमात्मानं प्रति सिध्यन्नजडोऽहमर्थ एवात्मा। तत्संबन्धायत्ता तु ज्ञानस्यापि प्रकाशता। अत एव हि स्वाश्रयचेतनं प्रति प्रकटता, इतरं प्रत्यप्रकटता च ज्ञानस्य, सुखदुःखादेरिव। नचैवमात्मान्तरसंबन्धमर्थान्तरं वाऽपेक्ष्यायमात्माऽऽत्मने प्रकाशते। एतच्चानन्तरमेवोपपादयिष्यते॥

(अभेदसाधकाभिमते सहोपलम्भनियमेऽशेषहेत्वाभासवचनम्)

न[1] च ज्ञानेन सहोपलम्भनियमोऽहमर्थस्यार्थान्तरतां वारयति, ज्ञानस्यापि तथात्वप्रसङ्गात्। तदपि हि तेन[2] नियतेन सहोपलम्भमित्यहमर्थादनर्थान्तरं मिथ्यारूपमेवाऽऽपद्येत[3]। असिद्धश्च संविद्विशेष-

---

१. अथ संविदात्मवादोक्तस्य प्राकटयाभावादेस्स्वसंमतत्वात् तदुपर्युक्तमेव विमृक्ष्यन्, 'संविद एवात्मत्वे लाघवात्किमन्येन कल्पितेने' ति तदुक्तविषये समाधानरूपं, 'कल्पनायां ह्येष दोषः, प्रत्यक्षसिद्धत्वादन्यो दुरपलप' इत्यर्थपरं नन्वित्यादिग्रन्थं दूषयितुं तेनोपन्यस्तं यत् सहोपलम्भनियमादि, तत्खण्डयति। २. अहमर्थेन। सह उपलम्भो यस्य तदिति बहुव्रीहिः। 'सहोपलम्भ्य' मिति वा 'नियतसहोपलम्भ' मिति वा पाठस्स्वरसः। ३. अभेदं साधयतश्च संविदहमर्थस्य कल्पितत्वसाधन एव तात्पर्यम्। नीलतद्धियौ, अहमर्थतत्संविदौ वा अभिन्ने परस्परोपलम्भनियतोपलम्भकत्वादिति प्रयोगे मिथ्यात्वरूपपर्यवसितसाध्यस्य पक्षैकदेशे बाधादिकमत्र विवक्षितम्; अहमर्थो ज्ञानाभिन्नः स्वोपलम्भव्यापकसंविदुपलम्भकत्वादिति प्रयोगे च यत् स्वोपलम्भव्यापकयदुपलम्भकं तत् तदभिन्नमिति सामान्यमुखव्याप्तिविवक्षायां, संविदि स्वोपलम्भव्यापकाहमर्थोपलम्भकत्वरूपहेतुसत्त्वात्साध्याभावाच्च तद्दृष्टान्तेनात्रापि साध्याभावसाधनसंभवाद्धेतोर्विरुद्धता, तत्रैव व्यभिचारश्चेति ज्ञापितम्। अत्र सहत्वघटितहेतुनिर्देशस्तु – सहत्वस्य भेदाधिष्ठानत्वात् 'स्वभिन्नाहमर्थोपलम्भव्यापकोपलम्भगोचरसंवित्कत्वा' दिति ग्राह्यः। स्वं संवित्। एतदनुसारेण सामान्यमुखव्याप्तिवचनप्रकारोऽप्यूह्यः। ४. घटपटाद्येकैक संविदुपलम्भेपि चालिनीन्यायेनाहमर्थोपलम्भव्यापकत्वरूपविशे-

स्सहोपलम्भनियमः, प्रत्येकं व्यभिचारदर्शनात्। न च विशेषमात्रं (?) निर्धूत निखिलविषयविशेषोपश्लेषं वा वित्तिमात्रमस्ति, येन सहोपलम्भनियमस्संवेदितुरभिधीयेत। सामान्यं तु सदपि सौगतैर्न वस्तुतयाऽऽस्थीयते॥ समस्तवृत्तिप्रत्यस्तमयेऽपि स्वयञ्ज्योतिरयमात्माऽवतिष्ठत इति च वक्ष्यामः।

स्ववाग्विघातश्च – एकं द्वाविति निर्देशात्। द्वयोरेकक्रियानुप्रवेशे सहशब्दः; शिष्येण सहाऽऽगच्छत्याचार्य इति यथा॥ अपिच नीलतद्धियोरिति द्वे उपादाय, अभेद इत्येकत्वविधिः सवित्रीवन्ध्यात्वविधिरिव। अनेकान्तश्च संविदि प्रतिषिध्यमानैर्जडत्वादिभिः, सर्वज्ञ-

षणाभावात्साधनाप्रसिद्धिरिति। १. अत्र विशेषमात्रातिरिक्तमित्येतदर्थपरः पाठस्स्यात्। वित्तिविशेषमादाय व्यापकत्वाभावेपि वित्तिमात्रमादाय व्यापकत्वं भवतीति न, निर्विशेषं न सामान्यमिति न्यायेन विशेषातिरिक्तसामान्याभावात्। एवं घटसंविदित्येवं विषयवैशिष्ट्यं विसृज्य निर्विषयवित्तिमात्रग्रहणमपि दुष्करम्, तादृशवस्त्वभावादिति। २. ननु सविषयव्यक्त्यतिरिक्तवित्त्यभावेपि प्रकृते तादृशव्यक्तीनामेव संवित्त्वेन रूपेण सामान्यतोग्रहणेन व्यापकत्ववर्णनान्न दोष इत्यत्राह **सामान्य**मिति। अतद्व्यावृत्त्यात्मकापोहातिरिक्तभावरूपजातिस्सौगतासंमता। अतद्व्यावृत्तिश्च व्यक्त्यनतिरिक्तेति। ३. प्रकारान्तरेण साधनाप्रसिद्धिमाह **समस्ते**ति। सुषुप्तिप्रलयादावहमर्थप्रकाशोस्ति, न संवित्प्रकाश इति न व्यापकत्वमिति। ४. अभिन्नं सहोपलम्भ्यत्वादिति साध्यहेतुनिर्देशः एकं द्वाविति निर्देश एव, सहेति द्वयोरुक्तेः। तथाच पूर्वोक्तसहत्वघटितहेतावयं वाग्विघात इति। ५. सहोपलम्भनियमादभेदो नीलतद्धियोरिति तत्कारिकातः नीलतद्धियौ अभिन्ने इति प्रतिज्ञानिर्देशः प्रतीयते। तत्र पक्षतावच्छेदकहेत्वोर्द्वित्वैकत्वयो विरोधात्प्रतिज्ञाविरोधोपीति। ६. जडत्वमूर्तत्वादिकं हि सौगतैरपि संविदि नेष्टम्। तत्र जडत्वादेरपि संवित्प्रकाश्यतया संवित्सहोपलम्भनियमसत्त्वात्तत्र संविदभेदरूपसाध्याभावाद्व्यभिचारः। अभेदस्वीकारे च तस्याः जडत्वाद्यापत्तिः। ननु जडे व्यभि-

ज्ञानेन सहोपलम्भनियमभागिभिस्संसारिज्ञानैश्च । तेषामभेदाभ्युपगमे ज्ञानस्य जडत्वमूर्तत्वादि, बुद्धस्य बद्धत्वमित्यापद्येत ।

( एकज्ञानमात्रविषयत्वरूपसहोपलम्भनियमदूषणम् )

नियमेनैकज्ञानसिद्धत्वमप्युक्तप्रकारेण प्रत्युक्तम् ॥ विपक्षव्यतिरेकश्चासिद्धः । भवतु नियमेनैकज्ञानसिद्धत्वं ज्ञानज्ञेयज्ञातॄणाम्, मा च भूदभेदः; को विरोधः ?

किमप्रकाशरूपत्वात्प्रकाशमनुरुध्यते ।
व्यवहाराय नीलादिराहोस्वित्तदभेदतः ॥ १५॥

---

चार इति वक्तव्यम्, न तु जडत्वे इति, तथा हि सति संविदो जडत्वत्वापत्तिरेव स्यात् — सत्यम् — सौगतमते धर्मधर्म्यभेदादेवमुक्तम् ।

१. **सर्वज्ञस्य** सुगतस्य ज्ञानं हि संसारिज्ञानविषयकम् । तथाच तस्य ततो भेदे व्यभिचारः, अभेदे बुद्धस्य बद्धत्वापत्तिरिति । ननु संसारिज्ञानोपलम्भव्यापकत्वं सर्वज्ञज्ञानोपलम्भस्य कथम्, जीवेपि व्याप्यस्य सत्त्वादिति चेत्— उच्यते, संविद्विशेषैर्नियतसहोपलम्भाभावस्योक्तत्वात्तदर्थं संवित्त्वसामान्येन व्यापकत्वविवक्षया पक्षे स्वविषयकसंविदभेदसाधनेऽयं दोषः । यद्वा व्यापकत्वं नियमश्चेत्— पूर्वदोषः, व्याप्यत्वरूपश्चेत् — अयं दोष इति । २. अयं हेतुस्सहत्वाघटित इति पूर्वोक्तकिञ्चिद्दोषपरिहारः । एवं पूर्वं सहोपलम्भे विषयोपलम्भस्य संविदुपलम्भस्य चैकत्वनिर्बन्धो नासीत् । विषयोपलम्भव्यापकत्वं संविदुपलम्भे तदभिन्ने भिन्ने वा यथायथमिति विवक्षितम् । अत्रोभयोरेकज्ञानसिद्धत्वमुच्यते । तच्च स्वप्रकाशकज्ञानमात्रप्रकाश्यसंवित्कत्वं वा संवित्प्रकाशकज्ञानमात्रप्रकाश्यत्वं वा । आद्यं नीलादावसिद्धम्, संविदो नीलप्रकाशकपीतज्ञानप्रकाश्यत्वात् ॥ घटसंविद्व्यक्तेः घटज्ञानमात्रप्रकाश्यत्वमस्तीति चेत् — जडगोचरसंविद्व्यक्तेर्जडज्ञानमात्रप्रकाश्यत्वस्य, सर्वज्ञसंविद्व्यक्तेस्संसारिज्ञानज्ञानमात्रप्रकाश्यत्वस्य सत्त्वादुक्तदोषः । ३. द्वितीयसाधारण्येनाप्रयोजकत्वमाह **विपक्षेति** । हेतोर्विपक्षेऽभावोऽनिश्चितः, अभेदरूपसाध्यं मास्तु, संवित्प्रकाशकमात्रप्रकाश्यत्वमस्त्विति शङ्कासत्त्वादिति । तदुपपादयति **भवत्विति** । संविदं विनाऽप्रकाश्यत्वं जडत्वप्रयुक्तम्, नाभेदप्रयुक्तमिति । ४. दिवादिगोऽयं रुधधातुः 'अनो रुध

इति सन्दिह्यमानत्वान्नाभेदश्शक्यनिर्णयः ।
बोध्यस्थश्चैष नियमो न पुनर्बुद्धिबोद्धृगः ॥१६॥

स्पष्टश्च प्रत्यक्षबाधः, सर्वज्ञानेषु वेद्यादिव वित्तेरपि वेदितुर्भेदस्यापरोक्षत्वात् । न च प्रतियोगिनः प्रत्यक्षत्वं दृश्यत्वं वा भेदस्याऽपरोक्ष्ये त्वपेक्षितव्यम् , सिद्धिमात्रेण तदुपपत्तावप्रयोजकत्वेन तद्विशेषस्यानाक्षेपात् (?) । अनवभासमानेऽपि प्रतियोगिनि भावाः स्वरूपत एव विलक्षणाः प्रत्यक्ष्यन्त इति सर्वलोकस्वसाक्षिकमेतत् ॥

( ज्वालादृष्टान्तेनाबाधितत्वशङ्का )

ननु जीवतो भेदप्रत्यक्षस्य शिरसि पदनिधानेन सहोपलम्भनियमस्याभेदेन प्रतिबन्धग्रहणमिति कथमिव ततस्तद्बाधसंभवः ? तथासति हि ज्वालाभेदानुमानमपि तदेकत्वप्रत्यभिज्ञयाऽपोद्येत ॥

( ज्वालादृष्टान्तवैषम्यवचनम् )

अविशेषज्ञो देवानांप्रियः । तत्र हि क्लृप्तकारणदोषानुवृत्तौ सत्यां जायमानोऽपरोक्षावभासः न निरवद्यप्रत्यक्षपूर्वकमनुमानं बाधितुमर्हति । तथा हि – अचिरनिर्वापितारोपितेष्वेकवर्तिभागवर्तिषु बहुषु दीपेषु त-

काम'इत्यनूपसृष्टः कामार्थकः । कर्तरितिङ् । अत्र अनुरुणद्धीत्यपेक्षया एतत्प्रयोगो युक्ततरः । १. ज्ञातरि 'भवत्वि' ति हेत्वङ्गीकारेऽपि नेत्याह बोध्येति । ज्ञानानुरोधनियमो नीलादौ वेद्यमात्ररूपे जडे स्यात् , न बोद्धरि, तस्य स्वप्रकाशत्वात् । अतोऽहमर्थस्संविदभिन्नस्तदेकप्रकाश्यत्वादित्यत्र स्वरूपासिद्धिरिति । २. प्रत्यक्षरूपज्ञानत्वम् । भेदप्रत्यक्षे प्रतियोगिप्रत्यक्षमेव तन्त्रम् । तत्र वित्तेस्स्वप्रकाशतया प्रत्यक्षान्तरानपेक्षा प्रत्यक्षवित्तावेव, तत्स्वप्रकाशस्य प्रत्यक्षरूपत्वात् । अनुमित्यादिस्वप्रकाशस्य त्वनुमित्यादिरूपतया प्रत्यक्षान्तरविषयतयैव तन्त्रत्वमिति शङ्कितुराशयः । ३. सामान्यतः प्रतियोगिप्रकाशेन । ४. गोत्वेन गोज्ञानमप्यश्वरूपप्रतियोग्यभानेप्यश्वभेदज्ञानंरूपमेव । प्रतियोगिभाने तु सुतराम् । एतावता, ' भेदज्ञानसिद्धवत्कारः कथ ' मिति तेन कृता शङ्का परिहृता । ५. प्रत्यक्षस्यापि तृणीकारेण । ६. अभेदनिरूपितव्याप्तिग्रहणम् ।

च्छेदादर्शिनः सुसदृशतया स एवायमिति स्मृतिरुपजायत इति दृष्टम्। अतोऽन्यत्राप्यप्रतिबन्धपुष्कलकारणक्रमोपनिपातादवयवाविश्लेषाच्च सुसदृशनिरन्तरप्रवृत्तप्रदीपप्रवाहाऽऽलम्बनैव तथामतिरिति निश्चीयते। तथैकं[१] [स्मि] न्नानात्वप्रत्ययः स्वतःप्राप्तेन्द्रियवृत्तिविपर्ययप्रयुक्तः समसमयोपजायमानानेकानवद्यप्रत्यक्षप्रतिक्षिप्तविषयश्च द्विचन्द्रादौ दृष्ट इति नासौ तत्रैकत्वानुमानमभिभवितुं प्रभवति॥ नचैवमिह ज्ञातृज्ञानज्ञेयविवेकसाक्षात्कारी प्रत्यय इति प्रतिरुणद्ध्येवायमिहाभेदानुमानोदयप्रसक्तिम्। नचोपलब्धिसाहित्यनियमादेव तथात्वमत्रानुमेयमिति युक्तम्, विपक्षे बाधकानुपलब्धेः। संविदधीनसिद्धितयापि तथानियमोपपत्तेः। अनैन्द्रियकत्वेन च तद्वृत्तिविपर्ययस्याकिञ्चित्करत्वात्। योग्यानुपलम्भपराकृतत्वाच्च बाधकप्रत्ययस्य। अपिच विषयसिद्धिर्हि संवित्। सा च स्वयंप्रकाशेत्यविवादः। तेनावर्जनीयस्तथा नियमः। न च भेदोऽपि सिद्धिमन्तरेण सिध्येदित्यनुन्मत्तेन युक्तमापादयितुमित्यलमनेनानुभवपराहतमतातिव्याकुलीकरणेन॥

(प्रकाशातिरिक्तासंभवखण्डनम्)

अप्रकाशात्मनश्च नीलादेः प्रकाश इति अनुभवसिद्धत्वान्न सम-

१. एकस्मिन्निति युक्तम्। एकन्नानात्वेत्यत्र एकमिति पदच्छेदे आलम्ब्येति पदमावश्यकम्। वृत्तिविपर्ययेति—इन्द्रियप्रसरणे अङ्गुल्यवष्टम्भादिकृतान्यथाभावेत्यर्थः। २. अन्यपुरुषीयमिदम्। ३. घटमहंजानामीति मिथोभेदग्राहिप्रत्यक्षम् एवं कारणदोषजन्यं नेत्यर्थः। ४. सहोपलम्भनियमादभेदसाधनार्थात् तथात्वं कारणदोषजन्यत्वमपि। ५. नन्वत्रापि द्विचन्द्रादाविवेन्द्रियप्रसरणविपर्यास एव मूलमित्यत्रेदं वाक्यम्। इन्द्रियग्राह्यविषये हि तद्वृत्तिविपर्यासस्य भ्रमहेतुता, न तु तदयोग्याहमर्थादिविषये इति। ६. कारणदोषनिश्चयाभावेपि बाधकप्रत्ययाद्भ्रमत्वनिश्चयोऽस्तु; तत्राह। ७. संविदधीनसिद्धित्वेपि संविदुपलम्भनियमः कुत इत्यत्राह। ८. संविदधीनसिद्धित्वमेवं कथमित्यत्राह नचेति। भेदोपि — संवित्प्रतियोगिकभेदरूपत्वेन संप्रत्युच्यमानो घटादिरपि। ज्ञातृज्ञेयग्रहणमेव भेदग्रहणमिति हि प्रागुक्तम्। ९. इतीदमिति प्रार्थनाकर्तृ।

र्थनान्तरं प्रार्थयते ॥ आत्मा तु प्रकाशस्वभाव एव । न च तावता ज्ञानत्वम्, स्वतन्त्रत्वात् । परतन्त्रमागन्तु यावदर्थेन्द्रियसन्निकर्षादिकारणसन्निधानमवतिष्ठमानमर्थावच्छिन्नरूपं ज्ञानमिति प्रागेवावोचाम । आत्मा तु स्वतन्त्रो ज्ञाता अहमिति प्रत्यात्मं प्रथते । यदि पुनरीदृशोऽप्ययमनन्याधीनसिद्धितया ज्ञानमभिलप्यते, अभिलप्यतां कामम् । तथापि ज्ञानवदेवेदं ज्ञानम्, न ज्ञप्तिमात्रतया (त्रं तथा) ।

( ज्ञानातिरिक्तात्मनि श्रुतिप्रमाणोपन्यासः )

अत एव हिच्छन्दोगाः, 'अथ यो वेदेदं जिघ्राणीति, स आत्मा' इत्याद्यामनन्ति । तथा, 'कतम आत्मेति प्रश्नपूर्वकमिदमेव लक्षणमानन्ति वाजसनेयिनः, 'योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इति । अत्र हि, 'योऽयं सर्वलोकानुभवसिद्धो विविधविषयवेदनप्रचुरः प्राणेषु प्रेरकतया स्थितो हृदयायतने अन्तर्ज्योतिरहमिति प्रत्यक्त्वेन प्रकाशते, स पुरुष' इति यथोदितमेवात्मस्वरूपमुपादिश्यते । 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष' इत्याथर्वणाः । तथा, 'विज्ञातारमरे केन विजानीया' दिति, 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्', 'स उत्तमः पुरुषः.... ....नोपजनं स्मरन्निदं शरीरम्','एवमेवास्य परिद्रष्टुरिमाष्षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति', 'तस्माद्वा एतस्मान्मनोमया-

---

अतः प्रकाशाप्रकाशयोर्विरोधः प्रागुक्तोऽयुक्तः, कालभेदेनाविरोधात् । १. 'प्रकाशस्वाभाव्ये च संवेदनत्व' मित्युक्तं निरस्यति । २. लोकप्रसिद्धज्ञानरूपत्वाभावाद्गौणोऽयं निर्देश इति भावः। ३. एवं सौगतोक्तं निरस्य तदनुसारिप्रच्छन्नमतनिरासायात्मनो ज्ञातृत्वे श्रुतीरपि दर्शयति । **विज्ञानमयः** तद्गुणप्रचुरः । अन्तर्ज्योतिः स्वप्रकाशः। अत्र 'अयं हृदी'ति हृदयावच्छेदेनोपलम्भो दर्श्यते । अतएव सिद्धो नासादिगप्राणभेदः 'प्राणेष्वि'ति तत्पृथक्कारेण ज्ञाप्यते । ४. हि यतः **द्रष्टा** .... दर्शनादिरूपप्रकाशधर्मकः, अत एव **विज्ञानात्मा** प्रकाशस्वरूपोऽपि प्रकाशधर्मकप्रदीपवदिति । ५. प्रश्नोपनिषदि (६-४) उक्ताः ; देहेन्द्रियाणि वा ।

दन्योऽन्तर आत्मा विज्ञानमयः ' इत्याद्याः ॥

सत्यं[1] ज्ञानमित्यत्रापि ब्रह्मलक्षणनिर्देशे ज्ञानशब्दो न ज्ञानमात्रवचनः, अपितु तद्वद्वचनः। तद्वचनत्वे ' लिति ' (पा. ६-१-१९३) इति आद्युदात्तत्वप्रसक्तेः[2]। अन्तोदात्तश्चायं ज्ञानशब्दः। मत्वर्थीयाच्प्रत्ययान्तत्वे तथात्वं घटते, नान्यथेत्येतत् परमात्मनिरूपणे अतिनिपुणमुपपादयिष्यामः ॥ ऐतरेयोपनिषदपि 'प्रज्ञानं ब्रह्म' इत्युक्त्वा, स एतेन प्राज्ञेनात्मनेति प्रकृष्टज्ञानवन्तमेवेश्वरं दर्शयति ॥

तत्सिद्धं ज्ञातैवायमात्मेति ॥

( अथानन्यसाधनत्वप्रकरणम् )

किं[3] पुनरस्मिन् देहादिव्यतिरेकिणि चेतने प्रत्यगात्मनि प्रमाणम्?

अनुमानमिति नयविचक्षणोऽक्षपादः – यदाह – ' इच्छाद्वेषप्रयत्न सुखदुःखज्ञानान्यात्मनो लिङ्गमिति ' ( १ - १ - १० ) इति।

( अक्षपादमताऽऽक्षेपः )

किममीषामात्मना[4] अविनाभावो दृष्टः, धूमध्वज[5]विशेषेणेव धूमविशेषस्य? हन्तैवं तत एव तत्प्रमितेः किमनुमानेन?

( तार्किकेणाऽऽशयाविष्करणम् )

माभूद्विशेषतोदर्शनम्[6], सामान्यतस्तु भविष्यति। तथाहि –

---

१. जीवात्मनीव परमात्मन्यपि ज्ञातृत्वस्वभावे श्रुतिं दर्शयति। २. तेन सूत्रेण तादृशप्रत्ययात्पूर्वस्योदात्तविधानादिति। ३. एवं देहेन्द्रियमनःप्राणधीभ्योऽन्य इति विवेचितम्। अथानन्यसाधनत्वं विक्रियते। अनन्यत् स्वं साधनं ज्ञापकं यस्येत्यनन्यसाधनः। तत्रानुमानादेस्साधनत्ववादिनां मतं विमृश्यते। विप्रतिपत्त्यवसरदर्शितक्रमेण गौतमकापिलादितार्किक–श्रोत्रिय – कौमारिल — प्राभाकरमतान्युपन्यस्य सिद्धान्तं वक्ष्यति। ४.धूमादाविवेच्छादौ व्याप्तिग्रहणाभावादनुमानमपि नेति शङ्कते। ५. धूमो ध्वजो यस्य सोऽग्निः। उदर्याद्यग्नेर्धूमादननुमानात्, जलसिक्ताङ्गारजन्यधूमादेरन्यसाधकत्वाच्चोभयत्र विशेषपदम्। ततः दर्शनात्। ६. सामान्यतोदृष्टमनुमानं

इच्छादयः कार्यत्वानित्यत्वगुणत्वादिभिः शब्दादय इवाश्रिततयाऽनुमीयन्ते। यश्चैषामाश्रयः स आत्मा। गुणत्वञ्च परिशेषात्—[1] न सामान्यविशेषसमवायाभावाः, अनित्यत्वात्; न द्रव्यं कर्म वा, व्यापके[2] द्रव्यसमवायादिति। विशेषगुणत्वं चानित्यत्वे सत्यस्मदाद्येकेन्द्रियग्राह्यत्वनियमाद्रूपादिवत्॥ (सामान्यतोदृष्टानुमानाद्विशेषसिद्धिप्रकारः)

एवमाश्रयमात्रमुपस्थापयन्तोऽन्वयव्यतिरेकिणो हेतवः द्रव्यान्तरगुणत्वं प्रत्याचक्षाणैः केवलव्यतिरेकिसाधनैरात्मगोचरतया नियम्यन्ते। तथाहि भवति—इच्छादयो न महाभूतगुणाः स्वात्मन एव प्रत्यक्षत्वादबाह्येन्द्रियग्राह्यत्वाद्वा। ये भूतगुणास्ते स्वात्मपरात्मप्रत्यक्षाः बाह्यकरणप्रत्यक्षाश्च; यथा रूपादयः। न तथेच्छादय इति न तद्गुणाः। दिक्कालमनांसि[3] पुनः न विशेषगुणवन्ति; नापि तद्गुणानां प्रत्यक्षत्वमिति न तेषामपि गुणाः। अकारणगुणपूर्वत्वात् अयावच्छरीरभावित्वादित्यादयः शरीरविशेषगुणत्वप्रतिषेधहेतवः प्राचीनाश्चात्रानुक्रष्टव्याः। [4]तेनेच्छादयो न शरीर [ रादि ] गुणास्तद्गुणभावापवादकप्रमाणवत्त्वे सति गुणत्वात्। ये यथोक्तसाध्या न भवन्ति, ते यथोक्तसाधना अपि न भवन्ति, यथा रूपादयः। यथोक्तसाधनाःपुनरिच्छादय इति यथोक्तसाध्या एवेति; विमतिपदास्पदेभ्यश्शरीरादिभ्योऽर्थान्तरगुणा इच्छादय इति वा प्रतिज्ञा। यथोक्त एव हेतुः, उदाहरणञ्च[5] प्रयोक्तव्यम्। सामान्येन वान्वयः प्रदर्शनीयः — यो यद्गुणभावापवादकप्रमाणवत्त्वे सति गुणः, स ततोऽर्थान्तरस्य गुणः यथा पृथिव्यादिभ्यः[6] शब्द इति आकाशसिद्धिवदात्मसिद्धिरिति—

---

संभवतीति तार्किकःपृच्छति। १. इच्छादेर्गुणत्वसाधकं परिशेषानुमानमाह। २. विभुसमवेतत्वात्। विभुत्वञ्चेच्छाद्याश्रयस्य, सर्वदेशावच्छेदेन शब्दोत्पत्त्या गगनस्येव, सर्वतोजन्मलाभादिकार्येण सिद्धम्। ३. इच्छादयो न दिक्कालमनोगुणाः विशेषगुणत्वात्प्रत्यक्षत्वाच्चेति। ४. एवं तत्तदवृत्तित्वे प्रत्येकहेतुमुक्त्वा अनुगतमेकं विशिष्टप्रयोगमाह। ५. यथोक्तमित्यनुषज्यते। ६. पृथिव्यादिभ्योऽर्थान्तरस्य गुण इत्यनुषङ्गसिद्धम्।

(तार्किकाशयखण्डनम्)

इदमपि[1] न समीचीनमित्येके । तथाहि – अन्वयव्यतिरेकिहेतुभिर्देहादिसाधारणमाश्रयमात्मत्वमवगमितम् । न च तावताऽऽत्मसिद्धिः ।

(केवलव्यतिरेकिणो हेत्वाभासत्वम्)

केवलव्यतिरेकी तु साधनदशामेव नासादयति, सपक्षान्वयविरहात्, असाधारणवत्[2] । नचैवं केवलान्वयिनो विपक्षव्यतिरेकदर्शनाविकलतया साधारणवदसाधनत्वम्[3], देशकालादिशङ्कितोपाधिविगमेऽप्य-

१. एवं तार्किकाशयमनूद्य दूषयति इदमिति । इच्छादयः किञ्चिदाश्रिताः गुणत्वादिति प्रथमानुमानम् । इच्छादीनां शरीराद्यसमवेतत्वसाधकान्यन्यान्यनुमानानि । इच्छादयश्शरीराद्यतिरिक्तसमवेता इत्यन्तिमानुमानम् । तत्र प्रथमानुमानेनात्मनि साधनीये मध्यानुमानानि सहायभूतानि, अन्तिमानुमानं वाऽऽत्मसाधकम् । नाद्यः, तत्र साध्यघटककिञ्चित्पदेनात्मरूपविशेषालाभात् । सहायभूतानुमानहेतवस्तु केवलव्यतिरेकित्वादहेतवः, अत एव नान्त्यपक्षोपीति । २. शब्दो नित्यश्शब्दत्वादित्यसाधारणहेतुर्हि सपक्षवृत्तित्वरूपाङ्गवैकल्यादसाधक इष्टः । हेतोः पञ्च रूपाण्यपेक्षितानि, पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वमबाधितत्वमसत्प्रतिपक्षितत्वञ्चेति । पक्षे सत्त्वं हेतोः पक्षसत्त्वम् ; एवमुपरि । ३. यथा धूमवान् वह्नेरिति साधारणहेतुस्तृतीयरूपाभावादसाधनम् , तद्वत् केवलान्वय्यप्यस्तु । वह्न्यादौ विपक्षः प्रसिद्धः; तत्र हेतोरसत्त्वं नास्ति; केवलान्वयिनि विपक्ष एवाप्रसिद्धः । एवं विशेषे सत्यपि विपक्षासत्त्वस्य दुरुपपादत्वमुभयत्र तुल्यमिति शङ्का । देशेति । साधारणस्थल इव व्यभिचारनिश्चयाभावात्केवलान्वयिनि न विपक्षसत्त्वनिश्चयप्रयुक्तं तद्रूपवैकल्यम् । किन्तु विपक्षाप्रसिद्धिप्रयुक्तम् । विपक्षप्रसिद्धिस्थल एव तत्र सत्त्वं शङ्क्येतेति तत्रैवासत्त्वज्ञानमपेक्षितम् । अप्रसिद्धिस्थले तु न तदपेक्षा, प्रसक्तौ सत्यामेव प्रतिषेधप्रवृत्तेः । यद्युच्येत – विपक्षाप्रसिद्धिनिश्चय एव दुर्लभः, देशान्तरे वा कालान्तरे वा हेतोस्सोपाधिकत्वशङ्कया व्यभिचारशङ्कासत्त्वादिति, तर्ह्यनुकूलतर्केणोपाधिशङ्काविगमस्संपाद्यते । एवं शङ्कितोपाधिविगमे सति यत्रकचित्साध्यसाहचर्यदर्शनत एव साध्यव्याप्तिपरिनिश्चयश्चान्वयव्यति-

न्वयदर्शनेन साध्यान्वितस्वभावतया परिनिश्चितत्वात् । न च साधनाभावे साध्याभावदर्शनमात्रेण साध्यान्वितस्वभावत्वं शक्यं निश्चेतुम् । अभावस्यानन्तदेशव्यापितयाऽनवयवेन ग्रहणस्यैव दुष्करत्वात् । कलयाऽप्यन्यत्र वृत्तौ संबन्धे नियमासंभवात् । सन्देहग्रस्तत्वाच्च-किं साधनाभावप्रयुक्तस्साध्याभावः, किं वा निमित्तान्तरप्रयुक्त इति ॥ पृथिव्यादिभ्योऽर्थान्तरगुणत्वप्रतिज्ञापि द्रव्यान्तराप्रसिद्धेरप्रसिद्धविशेषणा ॥ (साङ्ख्योक्तजीवानुमानसरणिदूषणम्)

एतेन साङ्ख्योदीरितसाधनभेदा अप्यापोदिता वेदितव्यास्संघातपरार्थत्वादयः । तथाच तानेव तावदादितो व्याकुर्महे –

(सांख्याशयाऽऽविष्कारः)

'संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥'

अयमर्थः – देहेन्द्रियादयः परार्थाः संघातत्वाच्छयनासनशरणादिवत् । प्रत्यक्षञ्च शरीरस्य संघातत्वम्, भूतानाञ्च । अव्यक्तमहदहंकारेन्द्रियाणाञ्च सुखदुःखमोहात्मतया तथात्वमनुमेयं तद्वदेव ॥ नचेन्द्रियाणामाहंकारिकत्वस्याभ्युपेतस्य, साध्यत्वाभिमतपारार्थ्यधर्मस्य चासंहतपरार्थत्वस्यान्यथात्वापादनादुभयविशेषविरुद्धत्वं हेतोः; अहं-

रेकिण्यपि क्लृप्तः; तथैव केवलान्वयिनोपि । सर्वोपाधिविगमेप्यन्वयो हि नव्यार्ति विनेति । १. साधनाभावे सति क्वचित्साध्याभावदर्शनमात्रेण । अनवयवेन कृत्स्नतः । २. हेतौ साध्यसंबन्धस्सामानाधिकरण्यरूपः । ३. अन्तिमानुमानेऽन्वयिनि दोषोऽयमेव । प्रतिज्ञायां पक्षांशे विशेषणं साध्यम्; तदप्रसिद्धमिति । ४. पश्चात्तन्निरासस्सुगमत्वाय । ५. शरणं गृहम् । ६. शरीरादिवदेव । ७. विरुद्धहेत्वाभासे विशेषविरुद्ध इति कश्चित्प्रभेदः । स च धर्मिविशेषविरुद्धो धर्मविशेषविरुद्ध उभयविशेषविरुद्ध इति त्रेधा । धर्मी पक्षः । धर्मस्साध्यम् । तत्तत्र सिद्धान्त्यभिमत आकारो विशेषः । तद्विपरीतसाधकत्वं विशेषविरुद्धत्वम् । अत्र च शयनादिदृष्टान्तेनेन्द्रियेषु परार्थत्वसाधकस्संघातत्वहेतुस्तद्दृष्टान्तेनैव तेषुना-

कारान्वयव्यतिरेकानुविधानेन, 'देवा वैकारिकाः स्मृता' इत्याद्यागमबलेन, प्रकाशलाघवगुणान्वयेन च वैकारिकाभिधानसात्त्विकाहंकारभेदयोनित्वस्येन्द्रियाणां प्रमाणसिद्धस्यापवादानुपपत्तेः। आत्मनस्तु संघातत्वे तस्यापि संघातान्तरार्थतयाऽनवस्थापत्त्या निष्प्रमाणकानेककल्पनाप्रसंगात्, अप्रयोजकत्वाच्च संघातत्वस्य शेषित्वे, दृष्टान्तदृष्टाशेषधर्मोपस्थापनेऽनुमानप्रामाण्यस्यैवासंभवापत्तेस्तदसंघातत्वस्य चाप्रचाल्यत्वात्। न च प्रमाणान्तरबलेनाऽनाहंकारिकत्वसंघातान्तरार्थत्वयोर्बाधेऽबाधितेन संघातपरार्थत्वेनापि न भवितव्यम्। एवंच संहतत्वव्यापकावरुद्धत्रैगुण्यादिरहितोऽसंहत आत्मा सिद्धः।

तथा देहादयस्सुखदुःखमोहात्मकतया परेणाधिष्ठीयन्ते, यन्त्रादिभिरिव रथादयः। अपिचानुकूलप्रतिकूलवेदनीये सुखदुःखे भृत्यभ्रातृव्यवदनुकूलनीयप्रतिकूलनीयवती। दृश्यत्वाद्देहादयो घटादय इव वि-

---

हङ्कारिकत्वं साधयतु। तथा प्रकृतानुमाने परार्थत्वरूपसाध्यघटकस्य परस्या संघातरूपत्वमेव सिद्धान्त्यभिमतम्; प्रकृतहेतुस्तु प्रकृतदृष्टान्तेनासंहतपरार्थत्वविपरीतं संहतपरार्थत्वं साधयत्विति शङ्का। १. तत्रेन्द्रियाणामनाहङ्कारिकत्वसाधनमागमबाधितमित्याह : **देवाः** इन्द्रियाणि। तत्र सात्त्विकाहङ्कारजत्वे युक्तिः **प्रकाशेति**। 'सत्त्वं लघु प्रकाशक'मिति ह्युच्यते। २. धर्मविशेषविपरीतसाधनमप्यप्रयोजकत्वेनानिष्टप्रसक्त्या च दुष्टमित्याह। ३. अयं चकारः **असंभवापत्ते**रित्यत्रान्वेति; इन्द्रियाहङ्कारिकत्वसमुच्चयार्थो वा। ४. संघातत्वहेतुना संघातस्य पारार्थ्यं साध्यमानमबाधितं देहादौ भवत्येवेति। ५. संहतत्वरूपं यत् व्यापकं तदवरुद्धं तद्व्याप्यं यत् त्रैगुण्यं तदभाववान् सिध्यति, संहतत्वरूपव्यापकाभाववत्त्वादिति। एवं त्रिगुणादिविपर्ययादिति व्याख्यातम्। ६. अधिष्ठानादित्येतद्विवृणोति। **यन्ता** – सारथिः। ७. भोक्तृभावादित्येतद्व्याख्याति। सुखमनुकूलनीयवत् अनुकूलतया वेदनीयत्वात् भृत्यवदित्येवमनुमानम्। दृष्टान्ते अनुकूलनीयेति देहस्य ग्रहणम्; पक्षे पुंसः। **भ्रातृव्यो** रिपुः। ८. भोक्तृभावादित्यस्य द्रष्टृत्वादित्यपरा व्याख्या; तदनुसारेणाह।

लक्षणद्रष्टृका इति । अधिष्ठातुरनुकूलप्रतिकूलवेदकस्य द्रष्टुस्त्रैगुण्यादि-विपर्ययः पूर्ववदेव निर्णेतव्यः । तथा देहादेरव्यक्तान्तस्य कृत्स्नस्य त्रिगुणात्मकतयाऽत्यन्तदुःखोपशमनलक्षणमोक्षदशानुपपत्तेस्तदर्थश्च शास्त्राणां महाधियाश्च प्रवृत्तेरस्ति देहादिव्यतिरिक्तोऽसंहतस्त्रैगुण्याद्यसंस्पृष्टः पुरुष इति । (साङ्ख्यानुमानदूषणम्)

अत्रापि संघातपारार्थ्यादिभिर्यद्यपि परः कोप्यधिष्ठाता द्रष्टा सिद्धः, तथापि न तस्यासंहतत्वात्त्रिगुणत्वादिराभिमतविशेषश्शक्यनिश्चयः । तथाहि–संघातस्य संघातान्तरार्थत्वनियमदर्शनबलादापतन्ती परापरा संघातकल्पना न दोषाय, कार्यतयेवानादिकारणपरम्परापरिकल्पना । नचाप्रयोजकत्वमपि, असंघातस्यासंगस्याशेषविक्रियाशून्यस्यानाधेयातिशयकूटस्थचितिमात्रवपुषः पुरुषस्य संघातं प्रति परत्वानुपपत्तेः। तद्धि तस्य शेषि भवति, तच्च तदर्थम्; यद्येनोपक्रियते क्रियते वा, यच्चोपकरोति करोति वा। न च तथा सांख्यपुरुष इति कथं तस्य संघातं प्रति परत्वम्? कथंतराश्च संघातस्य तादर्थ्यम्? अनुपकार्योप्युपकार्यतयाऽऽत्मानं मन्यत इति चेत् – कामं मन्यताम्; किमायातमुपकार्यत्वस्य? न खलु बालास्तलमलिनतादिमत्तया गगनमभिमन्यन्त इति तस्य तथात्वं भवति ।

(शेषित्वारोपस्याप्ययोगः)

अपिच तथाविधभ्रमोऽपि कस्य कथमुदयत इति विवेचनीयम्। न तावच्चितिशक्तेः, सर्वविक्रियाशून्यतयाऽतिविशुद्धायामशुभशतनि-

---

१. अधिष्ठानादिहेतुत्रयस्य त्रैगुण्यादिरहितात्मसाधनपर्यवसानं पूर्ववदनवस्थापरिहारायेत्याह । २. कैवल्यार्थं प्रवृत्तेरिति हेतुं व्याचष्टे । ३. अन्याऽन्येत्यर्थः । उपर्युपरीति यावत् । ४. धर्मविशेषविरुद्धतां पूर्वोक्तां स्थापयति । ५. इत्यमारादुपकारकप्रयाजाद्यभिप्रायेण । क्रियत इति स्वरूपनिष्पादक सन्निपत्योपकारकावहननपुरोडाशाद्यभिप्रायेण । ६. यस्येति शेषः । ७. यदिति कर्माध्याहार्यम् । ८. तलमधःप्रदेशो मूर्तरूपं वा । तथाह्युपरि नभो दृश्यते ।

दानभूतभ्रमपरिणामासंभवात् । अन्तःकरणन्तु बुध्द्यपरपरिभाषाभिधानमचेतनतया तनुरिव न भ्राम्यति ॥ अचिदपि स्वच्छतया चितिच्छायामापन्नं चेतनायत इति चेत् – न, नीरूपायाश्चितेर्बुद्धेश्चच्छा (चिच्छा) यातद्ग्रहणानुपपत्तेः॥ छायेवच्छायेति चेत्–कः खल्विवार्थः? चितिसरूपत्वमिति चेत् – हन्तैवमशेषविकाररहितचितिसरूपतापत्तावन्तःकरणमपि प्रत्यस्तमितसमस्तवृत्तिकमापद्यत इति दुरुपपादतरोऽयं भ्रमसुखदुःखादिविकारयोगः प्रत्यात्मसिद्धः॥ चेतनत्वेन सरूपत्वमिति चेन्न — चितिरेव हि ते पुरुषः, न चेतयिता । यथाह – तत्रभवान् पतञ्जलिः, यदा चितिरेव पुरुषः किमत्र केन व्यपदिश्यत इति ॥ अजडायमानत्वमिवार्थ इति चेत् — अजडत्वमपि न ज्ञातृत्वातिरिक्तं किञ्चिदित्युक्तमेव । तेनैवं तद्विवरणमिति च न किंचिदेतत्॥ अपिच चितिसंनिधानाधीनां बुद्धिसिद्धिमभिदधानः कथमिव तदजडिमानं प्रति[२]जानीयात्? न च[३] चितिस्वान्तयोर्बिम्बप्रतिबिम्बाधाराभिमतयोरन्यतरस्मिन्नप्यविद्यमानस्य विषयविशेषोपरक्तज्ञातृत्वलक्षणधर्मभेदस्य प्रतिबिम्बे संभवः । प्रत्युक्तश्चायं प्रतिबिम्बवादः प्रच्छन्नबाह्यमतप्रत्यादेशे ।

(वृत्त्यारोपसंभवशङ्कापरिहारः)

[५]यदुच्यते–निर्विकारायापि पुंसे तत्संनिधिमाहिमसमुत्थापित प्रमाणविपर्ययादिविचित्रवृत्तिभेदं स्वान्तमेव स्ववृत्तिं विषयविशेषांश्चो-

---

१. कथं चेतनायत इत्यत्राजडायमानतयेति हेतुनिर्देशे यदेवोपपाद्यं तदेवोपपादकमिति दोष इति । २. संप्रतिभ्यामनाध्याने (१-३-४६) इत्याध्याने परस्मैपदम् । आध्यानमुत्कण्ठापूर्वकस्मरणम् । परायत्तप्रकाशेऽन्तःकरणे कथं स्वप्रकाशत्वरूपमजडत्वं सोत्कण्ठं स्मरेत् । ३. चितिर्बिम्बः, स्वान्तं प्रतिबिम्बाधारः । न तत्र कुत्रापि भ्रान्तिमत्त्वम्, किन्तु चित्प्रतिबिम्बे इत्याशङ्क्याह । ४. ३९ पुटे । तत्राचाक्षुषस्यच्छायाऽदर्शनादित्युक्तत्वात् । यदि 'नीरूपायाश्चिते' रितीहानन्तरोक्तवाक्य इव तत्रापि किञ्चिदेवोक्तमित्यपरितोषः, तदा न्यायतत्त्वादिकमत्र विवक्षितमस्तु । ५. ननु ज्ञातृत्वमिति न चैतन्यवत्त्वं विवक्षितम्; कि-

प्रदर्शयति, सामन्तचक्रमिव पराक्रमीयः[1] प्रतिबलविलोलनादिवृत्तीस्स्वामिने। ततस्साक्षी भोक्ताचापदिश्यते. राजेति (व?) विक्रमी विजयी चेति-तदनुपपन्नम्- द्रष्टृ हि दर्शनीयं दृश्यते (दर्श्यते?)। न च दृशिमात्रात्मवादिनां सांख्यानां तदुपजीविनाञ्च प्रच्छन्नानां द्रष्टृत्वं वास्तवमस्ति। न च काल्पनिकेन शेषित्वसंभवः। कल्पनापि न संभवतीत्युक्तमेव; राजा तु सामान्यतो विशेषतो वा तेषु कर्मस्वमात्यान्नियुञ्जानस्तत्फलमैश्वर्यादि चाश्नुवानः स्वस्वामिभावहेतुक्रयप्रतिग्रहजननादिव्यापारयोगी न निष्क्रियस्यानाधेयातिशयस्य पुंसो निदर्शनमिति यत्किञ्चिदेतत्[2]॥ स्थूलोऽहं, गच्छाम्यहमित्यादिप्रत्यक्षमुदितविषयतया प्रसिद्धैवातीतकालता व्यतिरेकानुमानभेदानामित्यानुमानिकी[3]मप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियास्संगिरन्ते।

(आत्मनि श्रुति श्रुतार्थापत्त्योः प्रदर्शनम्)

श्रुतयो हि साक्षादेवात्मनश्शरीरादिव्यतिरेकमादर्शयन्ति- 'स एष नेति नेति', 'अकायमव्रणमस्नाविरं शुद्धमपापविद्धम्', 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्ये', 'न जायते म्रियते वा कदाचित्', 'जीवापेतं वाव किलेदं म्रियते', 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्याद्याः। कालान्तरभाविस्वर्गादिसाधनविषयश्चाऽऽक्षिपन्ति

---

न्तु वृत्तिरूपज्ञानवत्त्वम्। वृत्तिश्चान्तःकरणे वस्तुतोऽस्तीति आत्मनि तदारोपश्शक्यवचन इत्याशयेनाह। १. पराक्रमवत्तरमित्यर्थः, पराक्रमवच्छब्दात् ईयसुन्प्रत्यये द्वयोरेकस्यातिशयार्थे परे, 'विन्मतोर्लुक्' (पा. ५-३-६५) इति मतुपो लुक्। २. न च पुंसो द्रष्टृत्वाभावेऽप्यन्तःकरणकर्तृकशेषित्वारोपविषयत्वमेव बद्धत्वमिति वाच्यम्, विषयत्वस्यापि तुल्यनयान्निर्विकारेऽयोगात्, मुक्तस्यापि भ्रान्तकर्तृकतादृशारोपविषयत्वे बद्धत्वापत्तेश्च। ३. त्रैगुण्यादिविपर्ययसाधकानामसंहतत्वाधिष्ठातृत्वभोक्तृत्वरूपाणामनुमानविशेषाणाम्। प्रसिद्धेत्यनेन केवलव्यतिरेकिणोऽननुमानत्वमप्यस्फुटं दूषणमस्तीति सूच्यते।

देहादिव्यतिरिक्तं नित्यं चेतनमिति श्रुतितदनुपपत्तिप्रमाणकोऽयं प्रत्यगात्मेति ॥ ( मीमांसकेनाऽऽत्मनः प्रत्यक्षत्वोपक्षेपः )

ननु[1] हिताहितप्राप्तिपरिहारमात्रपरस्याम्नायस्य शिरसि किमिति महानयं भारः प्रक्षिप्यते ! अनुमानागमाद्यशेषप्रमाणमूलभूतेन प्रत्यक्षेणैव ह्येनं प्रतिपद्यामहे । 'ममेदं शरीरं', 'इदमहं जानामी' ति घटादिदृश्येभ्य इवायं द्रष्टा देहादपि पृथग्भूतः प्रत्यक्षं परिस्फुरति ।

( तत्खण्डनम् )

मैवं[2] वोचः । इन्द्रियार्थसन्निकर्षजं हि विज्ञानं प्रत्यक्षम् । नचेन्द्रियाणि रूपादिव्यतिरेकिणि निरतिशयसूक्ष्मे प्रतीचि, परागर्थ इव, सन्निकर्षेण ज्ञानं जनयितुमर्हन्ति । यथाऽऽम्नायते 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इति ।

अचित्त्वं[3]प्रतिबद्धश्च सर्वोऽपीन्द्रियगोचरः ।
तेन नैन्द्रियकं ज्ञानमात्मानं स्प्रष्टुमर्हति ॥ १७ ॥

( भाट्टसंमतमानसप्रत्यक्षाविषयत्वशङ्का )

स्यान्मतम् – भौतिकत्वाद्बहिरिन्द्रियाणि मा नामात्मनि प्रवर्तिषत । मनस्तु प्रवर्तिष्यते अभौतिकत्वादिति – तन्न, तस्यापीन्द्रियत्वे भौतिकत्वस्यापरिहार्यत्वात् । यथाऽऽम्नायते, 'अन्नमयं हि सोम्य मन' इति । प्रपञ्चितश्चैतन्नि ( श्चैतदेतन्नि? ) रूपणे ॥

अथोच्येत – अस्ति तावदहमित्यपरोक्षावभासः प्रत्ययः । नचैन्द्रियकत्वमन्तरेणासौ[4] संभवति । क्लृप्तञ्च बहिरिन्द्रियागोचरेऽपि सुखादौ स्वान्तस्वातन्त्र्यमिति तन्निमित्त एवायमहंप्रत्ययो युक्तः । प्रयो-

---

१. ननु सिद्धपरवाक्यप्रामाण्येऽपि आम्नायस्य क्रियार्थत्वान्न सिद्धवस्तुन्यात्मनि तात्पर्यम् । न च तच्छेषतयापि तद्बोधनैदम्पर्यम् ; अप्राप्ते हि शास्त्रमर्थवत् । आत्मा च प्रत्यक्षप्राप्त इति श्रोत्रियोपरि मीमांसकश्शङ्कते । २. श्रोत्रियः खण्डयति । ३. आत्मा नेन्द्रियग्राह्यश्चित्त्वादिति व्यतिरेक्यनुमानमिह विवक्षितम् । ४. अहमितिप्रत्ययः इन्द्रियजन्योऽपरोक्षावभासत्वादिति प्रयोगः ।

ग्रश्च भवति – आत्मा मानसप्रत्यक्षग्राह्यः बहिरिन्द्रियायोग्यत्वे सति प्रत्यक्षत्वात्सुखादिवदिति – ( मानसप्रत्यक्षसाधकस्याभासीकरणम् )

तन्न – संवेदनेन व्यभिचारात्, न[1] च तदप्रत्यक्षम्, जानामीत्यनन्योपाधिकतया प्रतिभानात्। अप्रत्यक्षत्वे च संवेदनस्यासि[2]द्धिरेव स्यादित्युक्तमेव ॥ ( ज्ञानस्य मानसप्रत्यक्षाविषयत्वसमर्थनम् )

न[3] च तदपि मानसप्रत्यक्षतया सपक्षे निक्षेपमर्हति, विमर्दासहत्वात्। यदा खलु कुतश्चिदात्ममनस्संयोगाद्विषयसंवित् उदयमासादयति, तदैव किं त[4]त एव तद्गोचरमपि वेदनं जन्यते, उतान्यदाऽन्येनेति वाच्यम्। न च युगपदुभयजननं संभाव्यते। तथा हि सति पराप[5]रतत्तद्गोचरनिरवधिकधीनिकुरुम्बजन्म तत्कालमेवाऽऽपद्येत। न च तदस्ति। युगपदुत्पत्तौ विषयविषयित्वनियमश्च निर्निबन्धनः[6]॥ असमसमयजन्मना ज्ञानेन वेद्यत्वे न प्रत्यक्षत्वम्, क्षणिकत्वेनाग्रिमज्ञानस्या[7]ऽऽग्राहकज्ञानोद्गमवस्थानाभावात्। भावे च सर्वज्ञानानां सर्वदाऽवस्थानप्रसंगात्। कार्यविरो[8]धित्वे चानन्तरमेव संस्कारोदयान्न कालान्तरे स्थितिरिति संविदो न मानसप्रत्यक्षवेद्यत्वम्।

( संवेदने व्यभिचारनिगमनम्, दोषान्तरवर्णनञ्च )

न[9] चाप्रत्यक्षा संविदिति स्फुटो व्यभिचारः ॥ ऐन्द्रियकत्वस्या-

---

१. नन्वस्मत्पक्षे ज्ञानस्यातीन्द्रियत्वात्कथं तत्र व्यभिचार इति भाट्टशङ्कायां तदतीन्द्रियत्वं निरस्यति। २. ज्ञानस्य या सामग्री तयैव ज्ञानकार्योपपत्तौ ज्ञानमिति वस्त्वेव न सिध्येदिति। ३. कथं व्यभिचारः, साध्यस्यापि सत्त्वादिति तार्किकशङ्कां क्षिपति। ४. संवेदनजनकेनाऽऽत्ममनस्संयोगेनैव संवेदनविषयकज्ञानान्तरमप्युत्पाद्यते। ५. घटज्ञान तद्ज्ञानज्ञान तद्ज्ञानज्ञानज्ञानेत्येवमनन्तज्ञानोत्पत्तिः। ६. पूर्वं स्थितमिन्द्रियसन्निकर्षबलात्पश्चाज्जातेन विषयीक्रियत इति युक्तम्। अन्यथा युगपदनेकोत्पत्तौ एकस्य विषयत्वमन्यस्य विषयित्वमेवेत्यत्र गमकं नास्तीति। ७. पूर्वज्ञानस्य। ८. कार्यनाश्यत्वे। कार्यं विरोधि यस्येति बहुव्रीहिः। ९. ननु संवेदने प्रत्यक्षत्वघटितहेतोरप्यभावान्न

नात्मत्वप्रतिबद्धत्वाद्विरुद्धता[1] च ॥ साध्यविकलश्च दृष्टान्तः, सुखदुःखयोः[2] प्रत्यक्षत्वानभ्युपगमात् । (सुखदुःखादिस्वरूपशोधनम्)

अनभ्युपगमश्चेन्द्रियपौष्कल्यनाशयोरेव[3] सुखदुःखत्वात् । न हि तस्मिन्नप्रत्यक्षे तत्पौष्कल्यं वैकल्यं वा प्रत्यक्षं भवति । इन्द्रियस्वरूप[3] इवाभ्यासपाटवात्तयोरपरोक्षत्वाभिमानः, मनोऽवस्थाभेदेष्विव चानुमेयमनोवादिनाम् । यस्तु सुगतमतावलम्बी विज्ञानाभिन्नहेतुजतया तयोरपि तदन्तर्भावमभिमन्यते; कणभक्षपक्षाश्रयणेन वा तयोरात्मविशेषगुणत्वम् – ताभ्यां सुखदुःखाधिकरणं व्याचक्षीत; स्वतस्सुखीत्येतद्विमर्शो वाऽत्रत्यम् । रागद्वेषादयस्तु चैतन्यस्यैवावस्थाविशेषास्तद्वदेव प्रत्यक्षी भवन्तीति न तन्निदर्शनेनानुमानोदयः । सुखप्रयुक्तविषयीकारचैतन्यं रागः; तद्विरोधप्रयुक्तविषयीकारं तदेव द्वेषः; भूतदुःखज्ञानेन तच्चलनं (चेतश्चलनं?) शोकः; आगामितज्ज्ञानेन चेतश्चलनं भयमित्यादि लक्षणग्रन्थादेवावगन्तव्यमित्यलं प्रविस्तरेण ॥

एकस्य चात्मनो निरंशस्य न स्वापेक्षया ग्राह्यग्राहकभावः, विरोधादित्यप्युक्तमेव । अंशभेदाश्रयणे तत्सिद्धये चांशान्तरमाश्रयितव्यम्, तथा तत्र तत्रेत्यनवस्था; संघातत्वं चात्मनः ॥

---

व्यभिचार इति भाट्टशङ्कायां परिहारं पूर्वकृतं स्मारयन् तत्र व्यभिचारं निगमयति ।

१. व्याप्यस्यैन्द्रियकत्वस्य साधको हेतुर्व्यापकानात्मत्वसाधकोपीति धर्मिविशेषविपरीतसाधनात्सिद्धान्तहानेश्च विरुद्धता । २. खमिन्द्रियम् । शोभनं खं सुखम्; दुःस्थं खं दुःखमिति व्युत्पत्तिरपीह भाव्या । ३. चक्षुषा पश्यामीत्यादौ । अनुमेयेति । अहमर्थभूतमन्तःकरणं मनःसाक्षिभास्यमिति पक्षे कामादिमनोऽवस्थाभानं युज्यते । अन्यमते त्वपरोक्षत्वाभिमान एवेति । ४. न्यायतत्त्वस्थम् । ५. देहेन्द्रियेतिकारिकास्थान्तिमपदविवरणम् । तथाच सुखदुःखयोरात्मविशेषगुणत्वेपि धर्मभूतज्ञानावस्थादिरूपत्वेन स्वयंप्रकाशत्वान्मनोग्राह्यत्वानङ्गीकारात्साध्यवैकल्यमेवेति भावः । ६. चैतन्यमेव । ७. तथाच रागादौ स्वयंप्रकाशे साध्यं नास्ति, शोकादौ च चेतोवृत्तौ हेतुरपि नास्तीति न कश्चिद्दृष्टान्त इति । ८. कर्मकर्तृविरोधात् । ९. अंशो ह्यवयव एवेति सावयवत्वापत्तिरिति ।

(पुनर्भाट्टशङ्का)

**ननु[1] च ग्राहकावभासश्श्रुत्या(?) स्वसिद्धान्तश्रद्धाविमलब्धबुद्धिभिरभिहितः, इन्द्रियादिप्रत्यासन्नतत्तत्पदार्थमात्रस्फुरणात्[2]। तादृशोपि कश्चिदस्तु नाम प्रत्ययः। सत्वागन्तुकात्मप्रतियोगिकप्राकट्यप्रकाशादिपदाभिधेयार्थधर्मानुमितज्ञानविशिष्टमानसप्रत्यक्षसिद्धात्मनिबन्धनः[3]।**

(तत्र प्राभाकरसमाधिः)

**उच्यते। अहो खलु स्वानुभव एव विभ्रमः परीक्षकाणाम्, यत्र विषयानुभवसमये पूर्वावस्थातो न कश्चिद्विशेषमयमात्मनोऽवबुध्यत इति। उक्तं ह्येतत्[4]—ईदृश एवायमर्थो ज्ञायते नवेति न विद्मः, मम वा प्रतिभासते परस्य वेत्यपि न विद्मः इति न जातुचिदेवं प्रतीतिरस्ति; ज्ञानज्ञात्रोरनवभासे तादृश्यपि प्रतीतिरापद्येत—इति। सोयं परसंचेतितात्स्वसंचेतितस्यातिशयस्सर्वत्र परिस्फुरन्नसति ग्राहकावभासे नोपपद्येत।**

---

१. एवमात्मनो मानसप्रत्यक्षग्राह्यत्वे दूषिते, प्राभाकरसंमतग्राहकावभासपक्षादरेण स्वपक्षदूषणं क्रियत इति मत्वा भाट्टस्तत्रानुपपत्तिं प्रदर्श्य स्वाशयमाह नन्विति। ग्राहकावभासो नाम इन्द्रियजन्यघटादिविषयग्राहिवित्तिषु आत्मनो गृहीतृत्वेन रूपेणावभासः। अत्र श्रुतिः 'अथ यो वेदेदं जिघ्राणीति स आत्मे'त्येवमादिः। **श्रुत्या** अन्यथा गृहीतार्थया। यद्वा श्रुत्याः इति षष्ठ्यन्तं स्वसिद्धान्तेत्यत्रान्वेति। श्रुत्येति स्थाने वित्त्येति स्यात्। तदा घटपटादिवित्तिकृतो ग्राहकावभास इत्यर्थः। २. घटादिप्रकाश एवानुभवसिद्धः, न ज्ञानज्ञात्रोरिति। ३. ज्ञाने जातेऽर्थ आत्मानं प्रति प्रकटो भवतीति अर्थस्य धर्मः प्राकट्यमात्मप्रतियोगिक आत्मनिरूपित इति। तथाच पूर्वमयं घट इत्येव ज्ञानं जायते। घटमहं जानामीति तु न सर्वत्र। क्वचिदेव तु ज्ञाततया ज्ञानेऽनुमितेऽनुमितज्ञानवानात्मा मनसा प्रत्यक्ष्यते तथेति। नचात्मनस्सांशत्वापत्तिः, आत्मनो देहादिमत्तया ग्राहकत्वं, प्रत्यक्त्वादिमत्तया ग्राह्यत्वमिति रूपभेदादेवोपपत्तेः। ईदृशस्थले कर्मकर्तृविरोध एव नास्तीति वा स्वीक्रियत इति। ४. २५. पुटान्ते। ५. संदेहप्रतिभटत्वरूपः। ज्ञानज्ञात्रोरभाने यथा परस्य घटज्ञाने सत्यपि, 'घटःपरेण ज्ञायते न वा', 'घटस्तस्मै भासते नवे' ति

अनुमितज्ञानाऽऽलम्बनत्वे च 'अज्ञासिष'मित्येव प्रतिभासस्स्यात्; न 'जानामी' ति; ज्ञानजन्यार्थातिशयदर्शनतद्व्याप्त्यनुसन्धानानुमानोदयसमयेऽनुमितिसतज्ज्ञानस्यातिवृत्तत्वात्। ज्ञानानुमानासंभवः पूर्वमेवोक्तः। मानसप्रत्यक्षत्वञ्चात्मग्राह्यधीनिरस्तम्(?)। तथासति हि स्वपरवेद्ययोरनतिशयस्स्यात्॥ (पुनर्भाट्टोन्मेषः)

नंनु कथमिव ग्राहकानवभासे स्वपरवेद्ययोरनतिशयप्रसङ्गः? न हि ग्राहकासिद्धिनिबन्धनः स्वपरवेद्यविशेषः; स्वसमवेतविषयबोधजन्मना परसमवेतबोधजन्मना च तद्विशेषोपपत्तेः। स्वपरसंबन्धिबोधविशेषोदयव्यवस्थाऽपि स्वीयपरकीयेन्द्रियार्थसन्निकर्षादिज्ञानहेतुसामग्रीभेदनिबन्धना। नचात्मसिद्धिरपि तत्सामग्र्यनुप्रवेशमर्हति, इन्द्रियादेरिवानवभासमानस्यैव हेतुत्वसंभवात्। न च विषयबोध एवा-

---

संदेहोऽस्माकम्, तथा स्वविषयेपि स्यादिति। १. नन्वम्भसि पिपासोपशमनशक्तेरिवाप्रत्यक्षस्यापि ज्ञानस्य झटित्यनुमानात्संदेहानुदय इति शङ्कायां तदुपेक्षया दोषान्तरमाह। २. पु. २६.। ३. आत्मा स्वं ग्राह्यो यस्यास्सा धीस्तया निरस्तम्। धियो मनोग्राह्यत्वरूपतार्किकपक्षोपि धियस्स्वप्रकाशत्वस्वीकारान्निरस्त इत्यर्थः। यद्वा आत्मा जीवो ग्राह्यो ययेति। जीवस्य मानसप्रत्यक्षत्वं भाट्टोक्तं धिय एव ग्राहकात्मावभासकत्वस्वीकारान्निरस्तमित्यर्थः। ४. ज्ञानं स्वस्य वा भवतु, परस्य वा। सर्वथा घटस्य वेद्यत्वमविशिष्टम्। एवं सति परवेद्यात्स्ववेद्येऽतिशयः स्वस्मै भासमानवित्तिविषयत्वरूपो वाच्यः। स च ग्राहकानवभासे न भवतीति। ५. अन्ते उक्तं स्वपरवेद्ययोरनतिशयं परिहरन् ग्राहकावभासं खण्डयति नन्विति। परवेद्ये परसमवेतवित्तिविषयत्वं, स्ववेद्ये स्वसमवेतवित्तिविषयत्वमित्ययमतिशय एव स्वपरवेद्ययोरतिशयः। तत्र स्वस्मैभासमानवित्तिविषयत्वं स्ववेद्यत्वमिति न निर्वाच्यमिति। जन्मना उत्पत्त्या। ६. ग्राहकावभासे सत्येव स्ववेद्यत्वरूपोतिशयस्सुवच इति वदतः को भावः? किं पूर्वमात्मावभासः, ततस्स्वस्य घटवित्तिरिति, किं वा घटवित्तिरेव घटमिवात्मानमपि गृह्णातीति विकल्प्य द्वयमपि क्रमेण दूषयति नचेत्यादिना।

त्मबोध इति सांप्रतम्। नह्यर्थान्तरसिद्धिरर्थान्तरस्य सिद्धिर्भवति, अतिप्रसङ्गात्। अपिच यदधीना भावानां रूपभेदव्यवस्था, तदपि हि संवेदनं तदानीं निलीनरूपमेवेन्द्रियादिवत्। कुतस्तु पुनस्तदाश्रयस्यात्मनः प्रतिभासप्रसक्तिः? यदाहुः – इदमहं जानामीति त्रितयावभासस्सार्वत्रिकः—इति, तदप्यनुभवानारूढमेवानन्तरमेव प्रतिक्षिप्तमिति॥

(भाट्टदूषणेन प्राभाकरस्य स्वमतपरिष्करणम्)

[1]अस्तु तर्हि ग्राहकतयैव सर्वार्थग्रहणसमयेष्वात्मसिद्धिः। अभ्युपगन्तव्या हि संविदस्स्वतस्सिद्धिः, सर्वप्रकारसाधनान्तरानिराकरणात्, सत्याश्च तस्याः कदाचिदनवभासादर्शनाच्च। यथा च संविदः प्रकाशाव्यभिचारः, तथा प्रपञ्चितं प्रथमा (प्रमाऽ) धिकरणे इति [2]नात्रोपक्षिप्य प्रतिक्षेप्तव्यम्। [3]सतोपि प्रमेयजातस्य स्वापादिसमयेऽनुपलब्धेरभ्युपगतं तावत्संविदस्तत्साधकत्वम्। अतः क्लृप्तार्थान्तरसाधनभावया तयैवात्मनोपि सिद्धिरभ्युपगन्तुं न्याय्या।

(स्वापमोक्षयोरहम्भानाभावोपपादनं प्राभाकरीयम्)

यत्तु[4] विषयवित्त्युपरमेऽपि स्वापसमये अयमात्मा प्रकाशत इति, तत् उपपत्ति[5]भिरुपप (पा?) द्यमानमपि यथाप्रतीति [6]व्यवहरतान्न

---

१. नन्विदमस्मदाकूतम्— विषयवित्तौ नात्मसिद्धिः कारणम्, न वा वित्तावात्मा विषयः; तस्याः विषयमात्रगोचरत्वात्। किन्तु विषयवित्तिवेलायां वेदितुस्सिद्धिः प्रकाशो भवति; वित्त्यभावे च न प्रकाश इति वित्तिभास्यत्वमात्मनः। वित्तिश्च स्वप्रकाशेति घटमहं जानामीति त्रितयावभासोपपत्तिरिति प्राभाकरो भाट्टं खण्डयति। २. न्यायतत्त्वे। ३. वित्तिरात्मसाधनी अर्थान्तरसाधनत्वेन क्लृप्तत्वादिति वक्ष्यन्, घटादेरेव स्वप्रकाशत्वं कुतो नेत्यत्राह। ४. वेदान्तिपक्षं प्राभाकरः खण्डयन्नात्मनो वित्त्येकभास्यत्वं समर्थयते। ५. सुखमहमस्वाप्सामित्यादिभिः। ६. अहम्भाने तदा सति 'अहमात्मानमन्वभूव' मिति व्यवहारस्स्यात्। 'सुषुप्तादुत्थिताश्चैवं निर्विद्यन्ते हि कामुकाः। वृथेयमन्तरेणैव कामिनीं यामिनी गता॥ आश्लिष्टामप्यबुद्ध्वैनां मृतवच्छयितं मया (शा. दी.

चित्तमनुरञ्जयति ॥ अपवृक्तस्य तु ज्ञानं हेत्वभावान्न संभवि ।
नित्यत्वे नित्यमुक्तिस्स्यादर्थवादास्तथोक्तयः ॥१८॥

निर्धूतनिखिलकरणकलेबरज्ञानकर्मवासनानुबन्धस्यापवृक्तस्य न खलु स्वपरसंवेदनोदयनिबन्धनं किंचित्संभाव्यते । न च मनसो नित्येन्द्रियत्वेन तत्संयोगादेव तदा ज्ञानं जन्यत इति युक्तम् , स्वरूपतो गगनवन्नित्यस्यापि सतस्तस्य इन्द्रियभावेन ज्ञानोत्पादकत्वस्य धर्माधर्मावरोधनिबन्धनत्वात् । धर्माधर्मावरुद्धं सन्मनो ज्ञानस्य साधनम् ।
सति नित्येन्द्रियत्वेऽपि श्रोत्रवत् करणत्वतः १९.

न च योगजधर्मानुगृहीततत्संयोगस्य साधनत्वम् , 'क्षीयन्ते चास्य कर्माणि', 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः' इत्यादिश्रुतेरितरसकलकर्मप्रक्षयश्रुतिविरोधात् । धर्मफलत्वे चापवर्गस्य पुनरावृत्तिप्रसङ्गः । 'नास्त्यकृतः कृतेन', 'तद्यथेह कर्मजि (चि) तो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इत्यादिश्रवणाच्च । नचात्म[3] (?) सत्तयैव तदानीं तज्ज्ञाननिमित्तमिति वाच्यम् , क्लृप्तत्यागाक्लृप्तकल्पनप्रसक्तेः । तन्मात्रनिमित्तत्वे च सर्वदा आत्मस्वरूपवत् तदपि विद्यत इति संसारानवतारप्रसंगात् , बन्धमोक्षावस्थयोरविशेषापत्तेश्च । न च देहेन्द्रियादिप्रतिबद्धतयेदानीं तदभाव इति वाच्यम् । तत्खलु प्रतिबन्धकं, यत्सति पुष्कलकारणे कार्योदयं निरुणद्धि । नचाद्याप्यात्मनस्तत्पुष्कलकारणत्वं सिद्धम् , शरीरेन्द्रियवतामेव ज्ञानदर्शनात् । क्लृप्तज्ञानकारणभावस्य तस्यैव तद्बन्धकत्ववचनमुन्मत्तवचः । अतो नास्त्यपवर्गदशायां ज्ञानम् । तात्कालिकज्ञानसुखादि-

१-१-५) इत्यपि व्यवहरन्तीति । १. पुण्य तदितरेत्यर्थः । २. अत्र जित इति पाठ उपलभ्यमानः फलनिर्देशेषु इमान् लोकान् जयतीत्येवं जिधातुप्रयोगादुपनिषदि चित इत्यत्र जित इति पाठं रोचयमानानामनुकूलः । ३. पुष्कलकारणात्ममात्रसत्तया तत् मनः । पृथक्पदम् । तदपि मनोपि । आत्मा सत्तयेति पाठसत्त्वे तज्ज्ञानेत्येकपदमात्मज्ञानार्थकम् । सत्तयैव स्वमात्रम् । तदपि आत्मज्ञानमपि । विद्यते विद्येतेत्यर्थः । ४. ज्ञानाभावः । ५. देहादेः ।

वादास्त्वात्मज्ञानविधिशेषतया गुणवादेन नेतव्याः। अतो विषयवित्ति-समय एवात्मसिद्धिनियमाद्यथोक्तनीत्या अर्थवित्तिषु वेदितृतयैवात्म-सिद्धिरिति ॥ ( प्राभाकरखण्डनमात्मस्वयम्प्रकाशत्वकथनाय )

इदमप्यात्मतत्त्वापरिज्ञानोल्लसितपरिमितमतिविकल्पजल्पितमिति न रोचयन्ते त्रय्यन्तविदः । विषयवित्तिर्हि विषयवित्तिरेव । न हि तया आत्मवित्ति ( त्तिः ) स्वरूपं वा ( आत्मा वित्तिस्वरूपं वा ? ) सेद्धुमर्हति, अतद्विषयत्वात् । यो हि यत्संविद्विषयो न भवति, नासौ तया सिद्ध्यति, रूपसंविदेव रसः । अविषयौ च विषयवित्तेर्बुद्धिबो-द्धाराविति तावपि न तया सिद्ध्यतः ॥ ननु वेद्यस्वभावोऽयं यत् स्वविषयसंविदा सिद्ध्यतीति । वित्तिस्तु वित्तिरेव, वेदिता च वेदितै-वेति कुतस्तयोर्वेद्यस्वभावानुप्रवेशः? उक्तं हि तयोर्मानसप्रत्यक्षागोच-रत्वमनुमेयत्वासंभवश्च । कुतस्तर्हि वित्तिसिद्धिः ? स्वत एव । स्वयं-प्रकाशा हि संवित् । ( वित्तिस्वतस्सिध्द्याक्षेपः )

मैवम् – सापि हि विषयवदेवान्यस्यैव प्रकाशमानतया न स्वत-स्सिध्यति ; स्वतस्सिध्यन्ती च सा किमिति कंचिदेव प्रति चका-स्ति, न सर्वान् प्रति? तत्समवायादिति चेत्–यत्समवायिनी हि या संवित् तस्यैव सा चकास्ति, नेतरस्य, तदसमवायादिति–यद्येवम् , आश्रितस्तर्हि आत्मसम्बन्धनिबन्धन एव संविदः प्रकाशः, तद्भावाभावानुविधानात् ।

---

१. ' सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्', ' सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश ' इत्यादयः । **गुणवादेन** गौण्या वृत्त्या ।
२. घटवित्तितदाश्रयौ न घटवित्त्यधीनसिद्धिकौ घटवित्त्यविषयत्वादित्यनुमाने हेतौ वेद्यत्वे सतीति विशेषणं देयमिति प्राभाकरश्शङ्कते । ३. वित्ति-वेदित्रोः प्रकाशे विषयत्वं नापेक्षितमिति सत्यम् ! वित्त्यधीना च वेदि-तृसिद्धिरिति वदता वित्तिसिद्धिः किमधीनेति वक्तव्यमिति सिद्धान्ती पृच्छति ।
४. तत्समवायादिति स्वोक्तं स्वयमेव प्राभाकरो विवृणोति । ५. सिद्धान्त्याह ।
६. आत्मसंबन्धादात्मने प्रकाशत इयं संवित्, अन्यसंवित्तु आत्मसंबन्धाभावा-

यद्युच्येत — प्रकाशस्वभावाया एव सत्याः प्रतियोगिविशेषावच्छेदा[1]यैव तदपेक्षा, न स्वरूपसिद्धय–इति; कुतः खल्वयं निश्चयः? यदि हि प्रतियोगिनिरपेक्षैव कदाचिदात्मस्वरूपमिव संवित्प्रकाशेत, तत एवमध्यवस्येमापि । न च तथाऽस्ति । आश्रयप्रतियोगिसापेक्षैव संयोगपु[2]त्रत्वादेरिव तस्यास्स्वरूपसत्तेति न पृथक्सिद्ध्युत्प्रेक्षावकाशः ॥ सत्यास्संविदः प्रकाशव्यभिचाराभावात्स्वरूपप्रयुक्तः प्रकाश इति चेत् — सत्याः किं तस्याः आत्मसम्बन्धव्यभिचारोऽस्ति ? अपिचैवं सुखदुःखादयोऽपि त्व[3]न्मते स्वतसिद्धास्स्युः । न हि तेऽपि सन्तो न प्रकाशन्ते ।

अथार्थान्तरसाधकतया सर्ववादिसंमतायास्संविद एव परं (वरं?) स्वयंप्रकाशत्वमाश्रितम् ; तयैव तथाभूतया तदितरबाह्याभ्यन्तरसकलपदार्थसिध्युपपत्तेः किमनेकै[4]स्स्वयंप्रकाशभावाभ्युपगमेनेति भावः — तथासति — सर्वस्यार्थस्य तद्वित्तेस्साक्षी सर्वत्र संमतः ।
आत्मैवास्तु स्वतस्सिद्धः किमनेकैस्तथाविधैः ॥ २० ॥

( वित्तिस्वतस्सिद्धावप्यात्मनस्तदनपेक्षप्रकाशत्वम् )

किञ्च[5]— यो यस्य साक्षी तेनैव तस्य सिद्धिर्न लौकिकी[6]।
अर्थस्येवार्थवित्तेरप्यात्मा साक्षी हि लक्ष्यते ॥ २१॥

---

दात्मने न प्रकाशत इत्यात्माधीनसिद्धिरेव संविदस्त्विति । १. ममेयं संवित्, मह्यं प्रकाशत इति आत्मवैशिष्ट्यभानायात्मापेक्षेति । २. संयोगादिकं हि अनुयोगिप्रतियोग्युभयापेक्षप्रकाशम्, तद्वदिति ; ३. स्वमते तु संविद एव स्वतस्सिध्यभावात्सुखादेर्ज्ञानावस्थारूपत्वाद्वा संवित्तुल्ययोगक्षेमतैवेति । ४. सुखादिस्वयंप्रकाशत्वेत्यर्थः । ५. ननु वित्तेस्स्वतस्सिद्धिं विहायात्मसंबन्धमात्रात्प्रकाशस्वीकारे आत्मनित्यत्वाणुत्वधर्माधर्मादयोपि तत एव प्रकाशेरन् । अतो वित्तिप्रकाशस्स्वरूपप्रयुक्त इत्यास्थेयम् । एवमपि वित्तेरात्मानं प्रत्येव प्रकटत्वादन्यं प्रत्यप्रकटत्वादात्मसंबन्धोपि कामं तत्प्रकाशसामग्रीप्रविष्टोऽस्तु । नचैवं विषयं विना वित्तिप्रकाशाभावाद्विषयस्यापि वित्तिप्रकाशकारणत्वापत्तिः, अतीतानागतादिरूपतया तस्य तदयोगादित्यत्र वित्तिस्वतस्सिद्धिं संमत्यैवाह । ६. लोकानुभवोपेता न । वित्तिर्नात्मसाधनी तत्साक्षिकत्वाद्घटादिवदिति प्रयोगः ।

सन्तु नामार्थवित्तयस्स्वतस्सिद्धाः; तथापि न ताभिरयमात्मा प्रत्यक्षीभवति, तत्साक्षित्वात्। यत्साक्षी खल्वयं पुरुषः, न तेनासौ प्रत्यक्षः, घटसाक्षात्कारीव घटेन। अर्थसंविदाश्च साक्षात्कारी चेतन इति सोऽपि न ताभिरपरोक्षीभवति॥ (आत्मस्वयम्प्रकाशत्वम्)

सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः।
सर्वे पदार्थास्तेनात्मा निरपेक्षस्वसिद्धिकः॥ २२॥

न हि कश्चित्पदार्थः स्वप्रकाशायासाधारणसजातीयार्थन्तरापेक्षो दृष्टः। न खलु घटः स्वसिद्धये घटान्तरमपेक्षते; अपेक्षते तु विजातीयमालोकादि। एवमालोकोऽपि प्रकाशमानो नालोकान्तरमपेक्षते;नापि स्वापेक्षप्रकाशं घटादिकमपेक्षते; अपेक्षते तु विजातीयमिन्द्रियम्। एवमिन्द्रियमपि नेन्द्रियान्तरं स्वापेक्षप्रकाशमालोकादि घटं वाऽपेक्षते; अपेक्षते तु विजातीयं संवेदनम्। एवं संवेदनमपि संविदन्तरं स्वाधीनसिद्धिकमिन्द्रियादिकं वा नापेक्षते स्वसिद्धौ; अपेक्षते तु विजातीयं स्वाश्रयभूतं स्वतन्त्रमात्मानम्। एवमात्माप्यात्मान्तरं, स्वाधीनसिद्धि संविदिन्द्रियादिकमपि स्वापरोक्षे नापेक्षते इत्यनन्यापेक्षा ह्यात्मस्वरूपसिद्धिः। (आत्मनि नित्यचैतन्यस्थापनम्)

तदेवं चित्स्वभावस्य पुंसस्स्वाभाविकी चितिः।

---

१. ननु संविदप्रकाश्यत्वेऽप्यन्याधीन आत्मप्रकाशोऽस्तु; तत्रेयं कारिका। **सजातीयस्वसाध्यार्थ**त्वन्नाम साध्यत्व सजातीयत्वान्यतरसंबन्धेन स्वविशिष्टार्थत्वम्। साध्यत्वं प्रकाश्यत्वम्। **आत्मसिद्धिः** स्वरूपप्रकाशः। तथाचात्मा निरुक्तसंबन्धेन स्वविशिष्टार्थनिरपेक्षप्रकाशः पदार्थत्वात् घटादिवदिति प्रयोगः। साध्यत्वसजातीयत्वैकैकघटनया प्रयोगद्वयं वा। २. न च विजातीयापेक्षा आत्मसिद्धिः, तस्यापि वित्तिवेद्यान्यतरतया स्वसाध्यत्वात्तदपेक्षाऽयोगात्। ३. एवमात्मनस्स्वरूपेण प्रकाशे नानुमानं, नागमः, न मानसप्रत्यक्षं, नापि विषयवित्तिः कारणमिति स्वरूपांशेऽन्याप्रकाश्यत्वं स्वप्रकाश्यत्वञ्चोक्तम्, नित्यत्वाणुत्वाद्याकारान्तरवत्तयाऽऽगमानुमानप्रत्यक्षप्रकाश्यत्वमस्त्येवेति वक्ष्यते। संप्रति 'चैतन्यप्रयुक्त एवात्मप्रकाशः। स चैतन्यानित्यतया स्वापमूर्च्छामोक्षादौ नानुवर्तत इति

नानापदार्थसंसर्गात्तत्तद्वित्तित्वमश्नुते ॥ २३ ॥

यथैव खलु सूर्यालोकस्तेनतेनार्थभेदेन संसर्गात्तत्तत्प्रकाशो भवति, घटप्रकाशः, पटप्रकाश इति, एवमात्मनः प्रकार(स्वभाव)भूतं चैतन्यमर्थविशेषसंसर्गात् घटसंवित् पटसंविदित्यादिप्रख्योपाख्ये प्रतिपद्यते । ते च चैतन्यस्य दशाविशेषाश्चेतयितुरात्मनो धर्मविशेषत्वादेव तस्यापरोक्षा भवन्ति, कादाचित्कबोधवादिनामिव बोधस्य विषयभेदावच्छेदादयः ।

(अनित्यं चैतन्यमिति पूर्वपक्षः = तत्र नित्यत्वेऽनुपपत्तिः)

ननु आत्मनश्चैतन्यमागन्तुकमिति न्यायवैशेषिकविदः, तन्मतोपजीविनश्चाभिनवमीमांसकाः; अर्थेन्द्रियसन्निकर्षाद्यन्वयव्यतिरेकानुविधानात्; गच्छामि, अगच्छमित्यादिवत् जानामि, अज्ञासिषमित्यादिकालावच्छेदप्रतीतेः । स्वापतुरीयादिदशासु च बोधाधारत्वे सुप्तप्रबुद्धवद्धमुक्तादिव्यवस्थाऽभावप्रसंगाच्च । नित्यस्य च ज्ञानस्यात्मसमवायिनः प्रतिकर्मव्यवस्थाऽपि दुरुपपादैव । तदा हि प्रकाशनशीलतया तस्याः,एकस्यां संविदि सर्वमेव प्रकाशेत; न वा किंचित् , अविशेषात् । अन्यदा तु यदर्थसन्निकर्षजुषेन्द्रियलिङ्गादिना या धीर्जन्यते, तदीयैव सेति व्यवस्था युक्तिमती । (सिद्धान्त्याशयखण्डनम्)

स्यान्मतम् – इन्द्रियादिप्रणाडिकया चैतन्यमेव तेनतेनार्थेनानुरज्यमानं तत्प्रकाशतया तदीयत्वेन व्यवतिष्ठते, अनुरागस्य चागन्तुकतया इन्द्रियाद्यनुविधानं कालावच्छेदस्स्वापादिव्यवस्था चोपपद्यत-

---

वादं चैतन्यनित्यत्वस्वीकारेणापि निरसितुमारभते । १. तत्तद्वित्तित्वमिति पाठ ईशावास्यकूरनारायणीयभाष्ये १६ मन्त्रे दृष्टः, 'तत्तच्चित्तत्वं', 'तत्तच्चिद्गत्व' मिति पाठद्वयमुपेक्ष्येहाऽऽदृतः । २. बुद्धिशब्दौ । ३. चैतन्यगतावस्थाया आत्मधर्मत्वं परम्परया । यद्वा आत्मनो यो धर्मस्तदीयविशेषत्वादित्यर्थः । ४.विषयविशेषवैशिष्ट्यप्रत्यक्षत्वानुमितित्वादयः । ५. अथ चैतन्यमनित्यमिति पूर्वपक्षी प्रत्यवतिष्ठते नन्वित्यादिना अत्राहुरात्मेतिकारिकाप्राग्ग्रन्थेन । ६. प्रतिविषयव्यवस्था नियतविषयकत्वम् । ७, अनित्यत्वपक्षे । ८. सि-

इति; तदसत् – अर्थान्तरसन्निकर्षेऽर्थान्तरस्यानुरागासंभवात् ॥ चैतन्यमपि तथा निष्क्रम्य सन्निकृष्यत इति चेन्न – अमूर्तस्याकाशस्येव निष्क्रमणप्रवेशाद्यनुपपत्तेः । गुणश्च चैतन्यं गुणिनमपहाय कथमन्यतो यास्यति? नचार्थोऽन्तः प्रविशति । स हि बहिर्देशसंबद्धस्सर्वलोकप्रत्यक्षः । जात्यादिषु चानुपपत्तिस्तुल्यैव ।

( आत्मनश्चैतन्यस्य चैकप्रत्यगर्थद्रव्यत्वशङ्कापरिहारः )

अथोच्येत – द्वेधा खल्वयं प्रत्यगर्थोऽवतिष्ठते बहलो विरलश्च । तत्र बहलः प्रत्यक् चेतनक्षेत्रज्ञादिपदपर्याय आत्मा । विरलस्तु चैतन्यज्ञानादिपदाभिधेयः प्रत्यगर्थतन्त्रतया गुण इत्युपचर्यते तेजोवत् , यथा बहलं तेजः प्रदीपः अग्निरिति । विरलं तु प्रभा ज्योतिरिति । अतो विरलात्मप्रदेशतया चैतन्यस्याऽऽलोकस्येव गमनं (गमन? संयोगादिकमुपपद्यत–इति–इदमनुपपन्नम् – निरवयवस्यामूर्तस्यासङ्गस्यात्मनो बहलविरलतादिधर्मानुपपत्तेः।यदि हि सावयवत्वमूर्तत्वानित्यत्वसंसर्गित्वादिकमपि धर्मजातमात्मन्यनुमन्वीमहि, तत एवमङ्गीकुर्वीमहि । न च तदनुमन्तुमुचितम् , अचेतनत्वापातादित्यलमनेनाऽऽर्हतमतानुकारदूषितेनाऽऽत्मवादेन ;

( चैतन्यविभुत्वखण्डनम् )

अथ मतम् – आत्माऽयमनवयवेन सर्वतस्सर्वार्थावभासनसमर्थचैतन्यानुबन्धस्सर्वव्यापी । अथ च न सर्वमस्य परिस्फुरति, तमोगुणप्रतिबन्धात् । सत्त्वोत्कटैस्तु करणैस्स्वकस्वकपाटवानुसारेण पाटिते तु तमसि तेतेऽर्थाः प्रतिभासन्ते । अतोऽन्तरेणापि ज्ञानार्थयोर्निष्क्रमणप्रवेशौ उपपद्यत एवार्थविशेषोपरागस्संविद इति – एवमप्यर्थाति-

---

द्भान्ती पृच्छति । १. इन्द्रियसन्निकर्षे हीन्द्रियानुरक्तत्वमेव वस्तुनस्स्यात् , न ज्ञानानुरक्तत्वमिति । २. घटादेर्मूर्तत्वादन्तःप्रवेशश्शङ्क्येतापि । अमूर्तजातिगुणादिविषये तु चैतन्यस्येव क्रियानुपपत्तिरेवेति । ३. सिद्धान्ते प्रत्यगर्थातिरिक्तं तद्धर्मभूतं द्रव्यं चैतन्यम् । अत्र तु कश्चिदेकमेव द्रव्यमंशभेदेनात्मज्ञानोभयात्मकमिति निष्क्रमणाद्युपपादयन् खण्डयते । ४. विरलो य आत्मैकदेशस्तत्तया । ५. यथा ज्ञानमर्थे प्राकट्यं व्यवह्रियमाणतां वा जनयत् अतिशयहेतुरेव, न तु

श्रयमात्रहेतुत्वादिन्द्रियलिङ्गादेः ज्ञानस्येव ज्ञापकत्वं न स्यात् , ज्ञानहेतुत्वाभावात् ; नचार्थप्रकाशस्य ज्ञानत्वम् , प्रकाशमानतयाऽर्थस्यापि ज्ञातृत्वप्रसंगात् ; यदाहुरात्मधर्मस्य चैतन्यस्य विषयेण संयोगो ज्ञानमित्युच्यत इति — तत्रापि संयोगस्योभयनिष्ठतया स एव प्रसङ्गः । अनुभवविरोधश्च—अहमिदमिदानीं जानामि, नेदानीमित्यात्मसमवायिनोरेव ज्ञानभावाभावयोरनुभवात् ॥ अविकृतप्रकाशहेतुकिरणसंहतावप्यहिममहसि प्रकाशकत्वप्रख्योपाख्यानवदुपपद्यत इति मा वोचः, तत्र हि गभस्तीनां द्रव्यतयाऽऽकुञ्चनप्रसारणद्रव्यान्तरसंगोगविभागादेस्संभवादुपपद्यते व्यवस्थोपलब्धिः । चैतन्यं तु गुण इति न तथा व्यवस्थामर्हति ।

(आत्मनि नित्यानित्यज्ञानद्वयभङ्गः)

अथोच्येत— द्विधा हि ज्ञानमात्मनः, स्वस्मिन्नन्यत्र च । तत्राद्यमुदयास्तमयरहितमात्मस्वरूपप्रयुक्तमनवरतमनुवर्तते । इतरत्तु तत्तदर्थसंबन्धीन्द्रियाद्यागन्तुकहेतुभेदायत्तात्मलाभं तत्तद्भावाभावानुविधायि तत्तदर्थप्रकाशतयोदीयते, लीयते च। तदपेक्षयैव स्वापजागराद्यवस्थाव्यवस्थाऽपि सङ्गंस्यत–इति; उच्यते । अभ्युपगच्छेमाप्येवं, यदि नित्यमात्मनि ज्ञानमस्तीत्यत्र किमपि साधनमुपलभेमहि ।

(सुषुप्तावात्मानुभवसाधक प्रातर्दृष्टतटाकन्यायभङ्गः)

नन्वङ्गीकृतस्तावज्जाग्रदवस्थायां सर्वदाऽऽत्मानुभवः; स्वापादिषु चानुमीयते, तात्कालिकस्य विषयज्ञानाभावस्योत्तरोत्तरकालं परामृश्यमानत्वात् । यत्कालीनोऽभावः परामृश्यते, तत्कालीनेन तदाश्रय-

---

ज्ञापकम्, तथेन्द्रियादिकमपि तमःपाटनरूपातिशयमात्रकरं स्यादिति ।

१. उक्तं सूर्यालोकदृष्टान्तं खण्डयति । २. ननु नित्यचैतन्यमङ्गीक्रियतां स्वमात्रविषये; अन्यविषये चानित्यज्ञानमिति कश्चिच्छङ्कते । ३. अयमात्मा स्वापकालिकानुभवगोचरः तत्काले ज्ञानाभावाश्रयतया पश्चात् (जागरकाले) परामृश्यमानत्वात् । यत् यत्काले किञ्चिदभावाश्रयतया पश्चात्परामृश्यते, तत् तत्कालिकानुभवगोचरभूतम् , यथा संप्रति कुञ्जराद्यभाववत्तया परिदृश्यमानं प्रातर्दृष्टतीरादीत्यनुमानम् ।

स्वरूपज्ञानेनापि हि भाव्यम्, मध्याह्नकालपरामृश्यमान[1] इव प्रातस्समयपरिदृष्टतटाकतीरादिवर्तिनि कुञ्जराद्यभावे। यत्कालीनाभावाश्रयतया यः परामृश्यते, स तत्कालीनस्वरूपानुभववान्[2], यथा प्रातरनुभूततटाकतीरादिः। स्वापादिकालिकार्थानुभवाभावाश्रयतया चायमात्मा परामृश्यते। अतस्तात्कालिकस्वरूपानुभववानिति–मैवम् – अनैकान्त्यात्[3] 'प्रातस्तत्र नाहमास'मिति स्वाभावभूमितया प्रतीतेन प्रातरनवगतगिरितटाकादिना। अभावप्रतिपत्तिसमये प्रतिपित्सिताभावसमकालवर्तिनस्तदाश्रयस्वरूपस्यावगत्या, विद्यमानत्वे तत्कालतयाऽवगमप्राप्तस्य प्रतियोगिनोऽनवगत्या च भवितव्यमभावज्ञानस्येत्येतावत्। अन्तरेणापि स्वापकालीनमात्मानुभवमिह तदुभयमुपपद्यते, प्रत्यभिज्ञयैव[4] प्रबोधे स्वरूपसिद्धेः; जाग्रदनुभवस्येव[5] पटीयसस्स्वापेऽपि सतोऽनुभवस्य स्मर्तव्यस्य सतस्तदानीमस्मरणाच्च।

---

१. प्रातःकाले तीरवर्तितया कुञ्जराभावे मध्याह्नकालावच्छेदेन परामृश्यमाने सतीत्यर्थः। इवेति। तत्कालीनेन तदाश्रयस्वरूपज्ञानेनेत्यनुषङ्गः। २. अनुभवगोचरः। ३. कदाचित्कश्चित्प्रातर्गिरितटाकादिकमज्ञातवानेव मध्याह्ने गिरितटाकादिवृत्तान्तप्रसङ्गे प्रातस्तत्र नाहमासमिति परामृशति। तत्र गिर्यादौ व्यभिचारः, प्रातःकालिकस्वाभाववत्तया परामृश्यमानत्वरूपहेतुसत्त्वात्, प्रातःकालिकावगतिगोचरत्वरूपसाध्याभावादिति॥ यदि तत्कालावच्छिन्नपाश्रयज्ञानं नापेक्षितम्, किं तर्ह्यपेक्षितमित्यत्राह **अभावेति**। अवगत्या अनवगत्या च भवितव्यमित्यन्वयः। **समय**- इत्यस्य **अवगत्येत्यत्रान्वयः**। यत्कालिकोऽभावो यत्र प्रतिपत्तुमिष्टः, तत्कालवर्तित्वेन तस्याश्रयस्यावगतिरभावप्रतिपत्तिसमयेऽपेक्षिता। **विद्यमानत्व** इत्यादि, यदि प्रतियोग्येव तत्काले स्थितं स्यात्, उपलब्धं स्यादिति वक्तुमर्हस्येत्यर्थकम्। **अनवगत्येति**, तत्काल इति शेषः। **अभावज्ञानस्य** अभावज्ञानं प्रति। ४. योऽयं पूर्वेद्युरपश्यम्, सोहं स्पृशामीति प्रबोधकालिकप्रत्यभिज्ञया प्रबोधरूपेऽभावप्रतिपत्तिकाले स्वापकालस्थतयाऽऽत्मस्वरूपमवगतम्। ५. यथा कुञ्जराभावज्ञानं प्रति प्रातस्तीरे कुञ्जरानवगतिरपेक्ष्यते। तथा स्वापे विषयानुभवविरह-

( जीवाविद्यानिरासानन्तरं ब्रह्माविद्यानिरासः )

(19) ब्रह्मणश्चेत् – न – सर्वज्ञं कथं तत् बम्भ्रमीति ते । अविद्याकृतदेहात्मप्रत्ययाधीनता न ते ॥ ब्रह्मसर्वज्ञभावस्य, तत्स्वाभाविकताश्रुतेः । भेदावभासगर्भत्वादथ सर्वज्ञता मृषा ॥ तत एवामृषा कस्मान्न स्याच्छब्दान्तरादिवत् । यथा शब्दान्तराभ्याससंख्याद्याः शास्त्रभेदकाः॥ भेदावभासगर्भाश्च यथार्थाः, तादृशी न किम् । सर्वज्ञे नित्यमुक्तेऽपि यद्यज्ञानस्य संभवः ॥ तेजसीव तमस्तस्मान्न निवर्तेत केनचित् । सर्वज्ञत्वादिवचनप्रामाण्यं व्यवहारिकम् ॥ तात्त्विकं तु प्रमाणत्वमद्वैतवचसामिति । नियामकं न पश्यामो निर्बन्धात्तावकादृते ॥ अश्रयप्रतियोगित्वे परस्परविरोधिनी । कथं वैकरसं ब्रह्म सदिति प्रतिपद्यते॥ प्रत्यक्त्वेनाश्रयो ब्रह्मरूपेण प्रतियोगि चेत्। रूपभेदः कुतस्त्योऽयम्; यद्यविद्याप्रसादजः ॥ ननु सापि तदायत्तेत्यन्योन्याश्रयणं पुनः ।

( अविद्याया वस्तुत्वम् )

(20) अवस्तुत्वादविद्यायाः ( नैतत् तद्दूषणं यदि ) ॥ वस्तुनो दूषण-

१. 'किञ्चासौ कस्ये ' ति प्रश्ने ब्रह्मण इति समाधिमनूद्य निरस्यति ॥ अविद्येति किं ज्ञानसंसर्गाभावादिरुच्यते, उत ज्ञानान्योन्याभावः ? आद्ये आह सर्वज्ञमित्यादि । अन्त्ये वक्ष्यति आश्रय प्रतियोगित्वे इति । तदुक्तं शतदू. १९. ' नापि ज्ञानान्योन्याभावः, ज्ञानान्तरानभ्युपगमात्, स्वप्रतियोगिकभेदायोगाच्चे ' ति । २. सर्वज्ञत्वं मिथ्या अयथार्थं भेदावगाहित्वादिति । ३. कर्मभेदकप्रमाणानि षट् पू. मी. द्वितीयाध्याये कथितानि । ददाति, जुहोतीत्यादौ शब्दान्तरम् ; समिधो यजति, तनूनपातं यजतीत्यभ्यासः ; तिस्र आहुती र्जुहोतीति संख्या ; अथैष ज्योतिरथैष विश्वज्योतिरिति संज्ञा ; वाजिभ्यो वाजिनमिति वैश्वदेव्यामिक्षेत्युक्तादन्यो गुणः ; मासमग्निहोत्रं जुहुतीति नित्याग्निहोत्रतः प्रकरणान्तरमिति । एषां कर्मभेदकानां शास्त्रभेदकत्वपक्षानुसारेण शास्त्रभेदका इत्युक्तम् । तदुक्तम् श्रु.प्र.जि.'शास्त्रभेदः कर्मभेदो वे'ति। ४. विद्याभेदरूपाविद्याश्रयत्वं प्रत्यक्त्वेन रूपेण; विद्यारूपस्य तस्य प्रतियोगित्वं ब्रह्मत्वेनेति । पुनः जीवाविद्यापक्ष इव ।

त्वेन त्वया केदन्निरीक्षितम् । ससा .... उ (स्वसाध्यसिद्धव) त्कारा-दोषोऽन्योन्यसमाश्रयः॥ न वस्तुत्वात्; अवस्तुत्वादित्यतो नेदमुत्तरम्॥

(अवस्तुत्वासिद्धिवचनम्)

(21) किञ्चाविद्या न चेत् (वस्तु व्यवहारः कुतस्त्वयम्) ॥ (नचैष व्योम—(नचावस्तु ख –) पुष्पादि व्यवहारवदिष्य (दीक्ष्य) ते । 'ना-प्यवस्त्विति चो (क्तिस्ते वस्तुतां तत्र साधयेत्) ॥ (निषिध्यते) सम-स्तेन नञा वस्त्विति चेत् (न तत्) । समस्तेन नञा वस्तु प्रथमं य-न्निषिध्यते ॥ प्रतिप्रसूतं (तं ?) व्यस्तेन पुनस्तदिति वस्तुता ! अ-तो न वस्तुना .... .... ॥ न कश्चकास्तीति विवक्षि-र्या (र्वा) स्म जातुचित् । (अतो 'न वस्तु नावस्तु याऽविद्या तद्वले सति ॥ भेदो न कश्चकास्ती'ति विवक्षीर्मा स्म जातुचित् । )

(अविद्याया जीवस्य चैकत्वनानात्वविकल्पः)

(22) किञ्च प्रपञ्चनिर्वाहजननी येयमाश्रिता ॥ अविद्या सा किमेकैव नैका वा तदिदं वद । तदाश्रयश्च संसारी तथैको नैक एव वा॥

(अविद्यैकत्वदूषणम्)

(23) सा चेदेका, ततस्सैका शुकस्य ब्रह्मविद्यया । पूर्वमेव निरस्तेति

---

१. तथाचैषां दोषाणां दोषता कुत्रापि न स्यात् । सर्वमिथ्यात्ववादिना चाव-स्तुन्येवैषां दोषत्वमेष्टव्यमिति । २. अन्योन्याश्रयदोषो हि स्वस्य स्वसाध्यापे-क्षसिद्धित्वप्रयुक्तः, न तु वस्तुत्वप्रयुक्तः । अतः अवस्तुत्वादितीदं नोत्तरमिति। ३. सदसदनिर्वचनीयवादिना, 'अविद्या न वस्तु नाप्यवस्तु' इत्युच्यते । तत्र न वस्तु इत्यंशमत्र दूषयति अवस्तुत्वादिति हेतुरसिद्ध इति बोधनाय । इदमेव स्थापयति नाप्यवस्त्वित्यंशशोधनेनोपरितनकारिकाभ्याम् । खपुष्पादिव्यव-हारो हि वस्तुशून्यः केवलं शब्दज्ञानानुपाती । नचैष लोकव्यवहारस्तादृशः । अन्यथाऽवस्तुनि प्रपञ्च इव खपुष्पादावप्येवं विचित्रव्यवहारप्रसङ्गादिति । द्विती-यरीत्या पाठकल्पने तु खपुष्पादीति पृथक्पदम् । तदा व्यवहारवत् व्यवहारविशि-ष्टम् । तथाचार्थक्रियाकारित्वाद्वस्तुत्वमेवेति । ४. तत्प्रतिप्रसवो नाम तन्निषेध

व्यर्थस्ते मुक्तये श्रमः॥ ( शुकादिमुक्तिमिथ्यात्वेन एकाविद्यापक्षसमर्थनम् )

(24) स्यान्मतम् नैव ते सन्ति वामदेवशुकादयः। यद्विद्यया[1] निरस्तत्वान्नाद्याविद्येति चोद्यते ॥ मुक्तामुक्तादिभेदो हि कल्पितो मदविद्यया। दृश्यत्वान्मामकस्वप्नदृश्यभेदप्रपञ्चवत् ॥ यत् पुनर्ब्रह्मविद्यातस्तेषां मुक्तिरभूदिति। वाक्यं तत् स्वाप्नमुक्त्युक्तियुक्त्याप्रत्यूहता ( युक्त्या प्रत्यूह्यता[2] ? ) मिति ॥ ( तत्खण्डनम् )

(25) नन्वीदृशानुमानेन स्वाविद्यापरिकल्पितम्; प्रपञ्चं साधयत्यन्यः कथं प्रत्युच्यते त्वया ॥ त्वदविद्यानिमित्तत्वे यो हेतुस्ते विवक्षितः; स एव हेतुस्तस्यापि भवेत् सर्वज्ञसिद्धिवत्[3] ॥ इत्यन्योन्यविरुद्धोक्तिव्याहते भवतां मते। मुखमस्तीति यत्किंचित् प्रलपन्निव लक्ष्यसे। यथा च स्वाप्नमुक्त्युक्तिसदृशी तद्विमुक्तिगीः ॥ तथैव भवतोऽपीति व्यर्थो मोक्षाय ते श्रमः। यथा तेषामभूतैव पुरस्तादात्मविद्यया ॥ मुक्तिर्भूतोच्यते, तद्वत् परस्तादात्मविद्यया। अभाविन्येव सा मिथ्या भाविनीत्यपदिश्यताम् ॥ सन्ति च स्वप्नदृष्टानि दृष्टान्तवचनानि ते। ननु नेदमनिष्टं मे यत् मुक्तिर्न भविष्यति ॥ आत्मनो नित्यमुक्तत्वान्नित्यसिद्धैव सा यतः। तदिदं शान्तिकर्मादौ वेतालावाहनं भवेत् ॥ येनैवं[4] सुतरां व्यर्थो ब्रह्मविद्यार्जनश्रमः।

( नित्यसिद्धमुक्त्यभिव्यक्तये यत्न इति शंका )

(26) अविद्याप्रतिबद्धत्वादथ सा नित्यसत्यपि ॥ असतीवेति तद्व्यक्तिर्विद्याफलमुपेयते। हस्तस्थमेव हेमादि विस्मृतं मृग्यते यथा ॥ यथा तदेव हस्तस्थमवगम्योपशाम्यति। तथैव नित्यमुक्तात्मस्वरूपा-

---

निषेधः। १. येषां वामदेवादीनां विद्यया। २. प्रत्यूह्यताम् बाध्यताम्। ३. सर्वज्ञोऽस्तीति वादिनस्सार्वज्ञ्यापादने सर्वज्ञो नास्तीति तन्निषेद्धुरपि तद्ज्ञानावश्यकतया सार्वज्ञ्यापत्तिः, तत्रेवेत्यर्थः। यद्वा 'सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा। तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयो'रितिरीत्या एकमते सर्वज्ञसिद्धावन्यमतेपि सर्वज्ञान्तरसिद्धिः; तत्रेवेत्यर्थः। ४. एवंसति, मुक्तेर्भूतत्वस्येव

नवबोधतः ॥ संसारिणस्तथाभावो व्यज्यते ब्रह्मविद्यया ।

(अभिव्यक्तिं विकल्प्य तत्परिहारः)

(27) हन्त केयमभिव्यक्तिर्या विद्याफलमिष्यते ॥ स्वप्रकाशस्य चिद्धातोर्या स्वरूपपदे स्थिता । संवित्, किं सैव, किंवाऽहं ब्रह्मास्मीतीति[1] कीदृशी ॥ यदि स्वरूपसंवित् सा, नित्यैवेति न तत्फलम् । अथ ब्रह्माहमस्मीति संवित्तिर्व्यक्तिरिष्यते ॥ ननु ते ब्रह्मविद्या सा सैव तस्याः फलं कथम् । किञ्च सा तत्त्वमस्यादिवाक्यजन्या भवन्मते ॥ उत्पत्तिमत्यनित्येति मुक्तस्यापि भयं भवेत् ।

(अविद्यायाः ब्रह्मधीप्रतिबन्धकत्वायोगः)

(28) अपिच व्यवहारज्ञाः सति पुष्कलकारणे ॥ कार्यं न जायते येन तमाहुः प्रतिबन्धकम् । इह किं तत, यत् उत्पत्तुमुपक्रान्तं स्वहेतुतः ॥ अविद्याप्रतिबद्धत्वादुत्पत्तिं न प्रपद्यते । न मुक्तिः नित्यसिद्धत्वात् ; न ब्रह्मास्मीति धीरपि ॥ न[2] हि ब्रह्माहमस्मीति संवित्पुष्कलकारणम् । संसारिणस्तदास्तीति कथं सा प्रतिबध्यते ॥ यतस्सा कारणाभावादिदानीं नोपजायते । न पुनः प्रतिबद्धत्वात् ; अस्थाने तेन तद्वचः ॥ (जीवैकत्वपक्षस्य पुनर्विशिष्य दूषणम्)

(29) किंचै[3]को जीव इत्येतत् वस्तुस्थित्या न युज्यते ; अविद्या – तत्समाश्लेष-जीवत्वादि मृषा हि ते ॥ प्रातिभासिकमेकत्वं प्रतिभासपराहतम् । यतो नः प्रतिभासन्ते संसरन्तस्सहस्रशः ॥ आसंसारसमुच्छेदं व्यवहाराश्च तत्कृताः । अबाधिताः प्रतीयन्ते स्वप्नवृत्त (त्तात्) विलक्षणाः ॥ ते[4]न[5] यौक्तिकमेकत्वमपि युक्तिपराहतम् । प्रवृ-

भविष्यत्त्वस्याप्यभावे । १. इति पक्षद्वये किंरूपेयमभिव्यक्तिरिति । २. अहं ब्रह्मस्मीति संविदो यत् पुष्कलं कारणं, तत् अदौ नास्तीति । ३. किञ्चेत्यादयः कारिका उपदशाश्शतदूषण्या (६१) मर्थतोऽनूदिताः । ४. अबाधितप्रतीतिगोचरत्वात्मकस्वाप्नवैधर्म्यरूपयुक्तिसत्त्वेन । ५. विवादाध्यासितं चेतनजातमहं चेतनत्वात्, सर्वाणि शरीराणि मयैवात्मवन्ति शरीरत्वादित्यादियुक्तिकल्पितम् ।

त्तिभेदानुमिता[1] विरुद्धमितिवृत्तयः ॥ तद्वत्स्वात्मवत् अन्येपि देहि-
नोऽशक्यनिह्नवाः । यथाऽनुमेयाद्वह्न्यादेरनुमाना (?) विलक्षणाः ॥
प्रत्यक्षं (?) ते तथाऽन्येभ्यो जीवेभ्यो न पृथक् कथम् । नचेच्चेष्टाविशे-
षेण परो बोद्धाऽनुमीयते ॥ व्यवहारोऽवलुप्येत सर्वो लौकिकवैदिकः ।
नचौपाधिकभेदेन मेयमातृविभागधीः ॥ स्वशरीरेऽपि तत्प्राप्तेः शिरः-
पाण्यादिभेदतः । त (य?) था तत्र शिरःपाणिपादादौ वेदनोदये ॥
अनुसंधानमेकत्वे, तथा सर्वत्र तं भवेत् । प्रायणान्न (न्ना) रकक्लेशात्
प्रसूतिव्यसनादपि[3] ॥ चिरातिवृत्ताः प्राग्जन्मभोगा न स्मृतिगोचराः ।
युगपज्जायमानेषु ( मिथो ह्यस्मरणास्थितः ) ॥ आश्रयासङ्करः, तत्र कथ-
मैकार्थ्यविभ्रमः[4] । ( अविद्याजीवानेकत्वपक्षस्यापि दूषणम् )

(30) न च प्रातिस्विकाविद्याकल्पितस्वस्वदृश्यकैः ॥ जीवैरनेकै-
रप्येषा लोकयात्रोपपद्यते । परवार्तानभिज्ञास्ते स्वस्वस्वमैकदर्शिनः ॥
कथं प्रवर्तयेयुस्तां सङ्गाद्येकनिबन्धनाम् ।

---

१. अनुमिताः देहिनः । २. अनुमेयस्य स्वाभिन्नत्वेऽनुमानवैदर्थ्यम्, प्रत्यक्षसिद्धत्वात् । न च तेषां परोक्षत्वान्मिथोभेदप्रत्यक्षायोगः । तेषु परोक्षेषु स्वभेदप्रत्यक्षायोगेऽपि स्वस्मिन् प्रत्यक्षे तद्भेदप्रत्यक्षसंभवादित्याशयेनाऽऽह **यथेति** । **अनुमानाः** इतिच्छेदः । महानसादिगतवह्निव्यक्तीनां व्याप्तिग्रहोपयोगितया तद्विषयतया चानुमानत्वम् । अन्वयार्थश्चैवम् — अनुमेयपर्वतवह्न्यादिविलक्षणा अनुमापकवह्न्यादयो यथा, तथा अन्येभ्यो जीवेभ्यः पृथक् त्वत्स्वरूपं ते न प्रत्यक्षं किमिति । ' प्रत्यक्षस्ते ' इति पाठान्तरे त्वत्स्वरूपमितिस्थाने त्वदात्मेत्यध्याहारः । **विलक्षणा** इति बहुवचनं भूयोदर्शनस्य व्याप्तिग्राहकस्य संभावितत्वाभिप्रायेण । अत्र ' यथाऽनुमेयाद्वह्न्यादेरनुमात्रा विलक्षणाः । प्रत्यक्षयन्ते तथे ' ति पाठोप्यभ्यूह्यते । ३. अन्येप्यस्मरणहेतवो मूलभावप्रकाशिकायां दर्शिताः । ४. वस्त्वेकत्वभ्रमः । ५. मिथस्समागमादिसत्त्व एव साध्याम् ।

( संविदस्सधर्मकत्वादप्यद्वितीयत्वायोगः )

(31) किंच[1] स्वयंप्रकाशत्वविभुत्वैकत्वनित्यताः ॥ त्वदभ्युपेता बाधेरन् संविदस्तेऽद्वितीयताम् । संविदेव[2] न ते धर्माः सिद्धायामपि संविदि ॥ विवाददर्शनात्तेषु; तद्रूपाणां[3] च भेदतः । न च ते भ्रान्तिसिद्धास्ते येनाद्वैताविरोधिनः ॥ तत्त्वाऽऽवेदकवेदान्तवाक्यसिद्धा हि ते गुणाः । आनन्दस्वप्रकाशत्वनित्यत्वमहिमा[4]द्यथ ॥ ब्रह्मस्वरूपमेवेष्टम्, तत्रापीदं विविच्यताम् । ब्रह्मेति यावन्निर्दिष्टं तन्मात्रं किं सुखादयः ॥ अथवा तस्य ते, यद्वा त एव ब्रह्मसंज्ञिनः । आद्ये तत्तत्पदाम्नानवैयर्थ्यं[5] वेदलोकयोः ॥ पूर्वोक्तनीत्या भेदश्च; जगज्जन्मादिकारणम् । अभ्युपेत्यैव हि ब्रह्म विवादास्तेषु वादिनाम् ॥ द्वितीये सैवं तैरेव ब्रह्मणस्सद्वितीयता । तृतीये ब्रह्म भिद्येत तन्मात्रत्वात् पदेपदे ॥ तत्समूहोऽथवा ब्रह्म तरुवृन्द विनाश ( वनादि? ) वत् । प्रकर्षश्च[6] प्रकाशश्च भिन्नावेवार्क (?) वर्तिनौ ॥ तेन न क्वापि वाक्यार्थो विभागो[7]ऽस्ति निदर्शनम् । ( स्वयम्प्रकाशत्वादेर्व्यावृत्तिरूपत्वेपि दोषः )

(32) जाड्यदुःखाद्यपोहेन यद्येकत्वैव वर्तिता ॥ ज्ञानानन्दादिशब्दा[8]नां न सतस्सद्वितीयता ॥ अपोहाः किं न सन्त्येव सन्तो वा नोभयेऽपि वा । सत्त्व सत्सद्वितीयः स्याज्जडाद्यात्मकतेतरे (सत्वे सत्

१. एवं संविदद्वैतखण्डनासिद्धान्तमारभ्य नीलादेस्संविद्भेदाभेदविचारं प्रस्तुत्य तद्दुर्निरूपत्ववर्णनार्थप्रसक्ताविद्यादूषणेऽवतीर्य तत्स्वरूप–तदाश्रय-तदवस्तुत्व–तद्गतप्रतिबन्धकत्व–तदेकत्वनानात्व– तदाश्रयजीवैकत्वनानात्वानामनुपपन्नतां प्रदर्श्य संप्रति पराभिमतधर्मवशादपि संविदो नाद्वितीयत्वमित्याह । २. ते धर्मास्संविद्रूपा एव न भवन्ति । ३. हेत्वन्तरमाह ॥ नित्यत्वविभुत्वादेर्मिथोभिन्नत्वाच्चेत्यर्थः । ४. महत्त्वं विभुत्वम् । ५. पूर्वोक्तैव । ६. ' सत्यादिवाक्यमखण्डार्थपरं समानाधिकरणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यव'दिति शतदूषण्याम् (३८-१५८ पु. ) । ७. निर्भाग इति पाठो वा, विभागो विगतभाग इत्यर्थो वा, अविभाग इतिच्छेदो वा । अखण्ड इति यावत् । ८. ज्ञानादिशब्दानां व्या-

सद्वितीयं स्यात् जडाद्यात्म कृतेतरे?) ॥ **सदसद्व्यतिरेकोक्तिः पूर्वमेव पराकृता । तथात्वे च घटादिभ्यो ब्रह्मापि न विशिष्यते ॥ किञ्चापोह्यजडत्वादिविरुद्धार्थासमर्पणे । नैव तत्तदपोह्येत तदेकार्थैः पदैरिव ॥ प्रतियोगिनि दृश्ये तु या भावान्तरमात्रधीः । सैवाभाव इतीहापि सद्भिस्ते सद्वितीयता ॥** ( प्रपञ्चस्यापि सदसद्व्यतिरेकित्वायोगः )
(33) **भूतभौतिकभेदानां सदसद्व्यतिरेकिता । कुतोऽवसीयते ? किन्नु प्रत्यक्षादुतागमात् ॥ प्रत्यक्षादीनि मानानि स्वंस्वमर्थं यथायथम् । व्यवच्छिन्दन्ति जायन्त इति यावत् स्वसाक्षिकम् ॥ यथाऽग्रतः स्थिते नीले, नीलिमान्यकथा न, धीः एकाकारा; न हि तथा स्फटिके धवले मतिः ॥ क्षीरे मधुरधीर्याद्दक नैवं** ( वं? ) नि ( शि )

---

वृत्तिपरत्वपक्षं शङ्कते **जाड्येति**; परिहरति **अपोह्य** इति । १. कृतस्समाहितः पक्ष इतरो यस्मात्तस्मिन् असत्त्वपक्ष इत्यर्थः । बहुव्रीहित्वादितरपदमसर्वनाम । गतेतरे इति वा अन्यो वा कश्चित् पाठस्स्यात् । २. वक्ष्यति च, 'घटवत्सदसत्त्वाभ्यामनिर्वाच्य' ( १४१ पु. ) मिति । ३. अपोह्यस्य जडत्वादेर्विरुद्धभावरूपाबोधने । 'लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते' ( ब्र. सि. ) इति त्वयैव किञ्चिद्रूपविशिष्टतया प्रतिपन्न एव किञ्चिद्रूपविशिष्टस्यैव व्यावृत्तिर्बोधयितुं शक्येत्युक्तत्वादिति भावः । ४. धर्मिमात्रार्थकैः, यद्वा निषेधमात्रार्थकैः ; न खल्वनुयोगिप्रतियोगिरूपद्वयाभावे निषेधकथेति भावः । ५. यदि घटस्स्यात् सोऽपि दृश्येत, योग्यत्वात् । अतो दृश्ये घटे यत् भूतलमात्रविषयं ज्ञानं तत् 'घटोऽत्र भूतले नास्ती' ति व्यवहारकारणम् । अतो नाभावरूपं किञ्चित्प्रमेयमिति ( शा. दी. १-१-५ ) मतानुसारेणेदम् । **इतीहापि** इत्यस्मिन् पक्षेपि । यदि 'केवलब्रह्मज्ञानमेवापोहः, नान्य इति' पूर्वपक्षी मन्येत, तदापि ज्ञानरूपैरेवापोहैस्सद्वितीयत्वमवर्जनीयमिति । अपीत्यनेन वस्तुतो ब्रह्मरूपधर्मिज्ञानमात्रेण जडाद्याशङ्काऽनिवृत्त्या भावरूपत्वेप्यपोहस्य ब्रह्मगतकिञ्चिद्धर्मात्मकत्वमेवेति सूच्यते । ६. नील इत्येकाकारैव नीले धीः; न तु नीलिमान्यस्य कथापि । ७. कषायधीर्नैवं मधुरविषयिणी ।

म्बकषायधीः । व्यवहाराश्च नियतास्सर्वे लौकिकवैदिकाः॥ सत्यं प्रतीतिरस्ति; अस्या मूलं नास्तीति चेत् – न तत् । सा चेदस्ति तया मूलं कल्प्यतां कार्यभूतया ॥ क्लृप्तञ्चेन्द्रियलिङ्गादि तद्भावानुविधानतः ।

( प्रत्यक्षस्य व्यवच्छेदकत्वायोगखण्डनम् )

(34) यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः ॥ ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः । भेदेतरेतराभावविवेका (धीवेगा) – ग्रहणेन सः ॥ स्वरूपमेव भावानां प्रत्यक्षेण परिस्फुरत् । भेदव्याहारहेतुस्स्यात् प्रतियोगिव्यपेक्षया॥ यथा तन्मात्रधीर्नानानास्तिव्याहारसाधनी । ह्रस्वदीर्घत्वभेदा वा यदै (थै?) कत्र षडङ्गुले ॥ एवं व्यवस्थितानेकप्रकाराकारवत्तया । प्रत्यक्षस्य प्रपञ्चस्य तं (स?) द्भावोऽशक्यनिह्नवः ॥ आगमः कार्यनिष्ठत्वादीदृशेऽर्थे न तु प्रमा । प्रामाण्येऽप्यन्वयायोग्यपदार्थत्वान्न बोधकः ॥ नासत् प्रतीतेः, बाधाच्च न सदित्यपि यन्न तत् । प्रतीतेरेव सत् किन्न, बाधान्नासत् कुतो जगत् ॥ तस्मादविद्ययैवेयमविद्या भवताऽऽश्रिता ।

( मिथ्यात्वमिथ्यात्वविचारेण जगत्सत्यत्वस्थापनम् )

(35) किञ्च भेदप्रपञ्चस्य धर्मो मिथ्यात्वलक्षणः ॥ मिथ्या वा परमार्थो वा नाद्यः कल्पोऽयमञ्जसा । *तन्मिथ्यात्वे प्रपञ्चस्य सत्यत्वं दुरपह्नवम् ॥ पारमार्थ्येऽपि तेनैव तवाद्वैतं विहन्यते । सर्वाण्येव प्रमा-

१. प्रतीतिनियममुक्त्वा व्यवहारनियममाह । २. व्यवच्छिन्दन्ति जायन्त इत्युक्तमयुक्तमित्याक्षेपं निरसितुमनुवदति । अयमर्थो ब्रह्मसिद्धौ (२, १७) ‘आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः’ इत्यादौ द्रष्टव्यः । अनेन च न वस्तु वस्तुधर्मो वे(१३०)त्युक्तं निरस्तं भवति । विधानं स्वरूपग्रहः,व्यवच्छेदो भेदग्रह इति त. टी. । विधानकार्यत्वाद्व्यवच्छेदस्य न यौगपद्यम् । क्षणिकत्वात्प्रत्यक्षस्य न क्रमेण स्वरूपभेदग्राहित्वे । ३. (?) तद्भावः तादृशाकारवत्त्वम् । ४. प्रत्यक्षं विचारितम् । आगमात्सदसद्व्यतिरेकसिद्धिमपास्यति । ५. अनुमानस्यासाधकत्वमाह । ६. ब्रह्मातिरिक्तपरमार्थमिथ्यात्वसत्त्वेनैव । ७. न तु मिथ्यात्वप्रमाणमात्रं ब्रह्मप्रमाणमात्रं वा । * अत्रान्यादृशः कारिकापाठक्रमो मुद्रितग्रन्थस्थोऽशुद्धः ।

णानि स्वंस्वमर्थं यथोदितम् ॥ असतोऽर्थान्तरेभ्यश्च व्यवच्छिन्दन्ति भान्ति नः । तथाहीह घटोऽस्तीति येयं धीरुपजायते ॥ सा तदा तस्य नाभावं पटत्वं वाऽनुमन्यते । नन्वस्तीति[1] यदुक्तं किं तन्मात्रं घट इत्यपि ॥ अर्थान्तरं वा तन्मात्रे सदद्वैतं प्रसज्यते । अर्थान्तरत्वे सिद्धं तत्[2] सदसद्भ्यां विलक्षणम् ॥ यद्येवम्[3], अस्ति ब्रह्मेति ब्रह्मौपनिषदं मतम् । घटवत् सदसत्त्वाभ्यामनिर्वाच्यं तवाऽऽपतेत्॥ आनन्दसत्यज्ञानादिनिर्देशैरेव वैदिकैः । ब्रह्मणोऽप्यतथाभावस्त्वयैवैवं[4] समर्थितः ॥ सदसद्व्यतिरेकोक्तिः प्रपञ्चस्य च हीयते[5] । यद्यथा किञ्चिदुच्येत तत् सर्वस्य तथा भवेत् ॥ तस्मात्[6] अस्तीति संवित्तिर्जायमाना घटादिषु । तत्तत्पदार्थसंस्थानपारमार्थ्यावबोधिनी ॥ सजातीयविजातीयव्यवच्छेद निबन्धनैः । स्वैस्स्वैर्व्यवस्थितै रूपैः पदार्थानां तु या स्थितिः ॥ सा सत्ता; न स्वतन्त्राऽन्या; तत्राद्वैतकथा कथम् । न च नानाविधाकारप्रतीतिश्शक्यनिह्नवा ॥

( धर्मनिषेधेपि सधर्मकतया सद्वितीयत्वम् )

(36) नैवेद्यं[7] वित्तिधर्मस्स्यादिति यत् प्रागुदीरितम् । तेनापि साधितं किंचित् संविदोऽस्ति न वा त्वया ॥ अस्ति चेत् पक्षपातः(बाधः)स्यात्[8]

१. घटोस्तीत्यत्र घटशब्दवाच्यमस्तिशब्दवाच्यसन्मात्रब्रह्मणोऽनन्यदन्यद्वा । आद्ये पटोस्तीत्यादावप्येवमिति सदेकतत्त्वसिद्धिः । २. घट इत्येतत् । ३. समानाधिकरणास्तिपदार्थाद्धटपदाद्यर्थस्य भिन्नत्वे । ४. आनन्दो ब्रह्मेत्याद्यैरानन्दादिभिन्नता । ५. सदसद्व्यतिरिक्तः प्रपञ्च इति प्रयोगे तद्भेदस्यैव प्रपञ्चे सिद्धेः । ६. ननु तर्हि समानाधिकरणस्थलेऽभेदस्यैव बोध्यत्वात् कथं सदद्वैतासिद्धिरित्यत्र —अस्तीति न ब्रह्मोच्यते, किन्तु घटादिपरतन्त्रो धर्म इति वदन्निगमयति । ७. एवं प्रत्यक्षादिप्रतीतिविधायकत्ववत् व्यवच्छेदकत्वस्यापि संभवात्, सत्त्वेन प्रतीतेषु सदसद्व्यतिरेकित्वायोगाच्चापोहानामपि सदसद्व्यतिरेकित्वायोगात् सर्वथा स्वयंप्रकाशत्वादिभिस्सद्वितीयत्वमित्युक्त्वा प्रकारान्तरेणापि तदाह । ८. पक्षपात इति श्रु. प्र. पाठः । निर्धर्मकत्वस्येवान्येषामपि धर्माणां

न चेत्ते विफलः श्रमः । अतः स्वरसविस्पष्टदृष्टभेदास्तु संविदः ॥ यथास्था (रथा) दिभिर्वा (र्बा) ह्यैनैक्यं याति (यथांव (वत्) स्थायिभिर्बाह्यैनैक्यं यान्ति ?) घटादिभिः ।

सहोपलंभानियमो न खल्वेकैकसंविदा ॥
न चेदस्ति ससामान्यं सर्वं संवेदनास्पदम् ।

(सहोपलम्भनियमेन ग्राह्यग्राहकापलापः)

(37) सहोपलंभनियमान्नान्योऽर्थस्संविदो भवेत् ॥ यदेतदपराधीन-स्वप्रकाशं तदेव हि । स्वयंप्रकाश (?) ताशब्दमिति वृद्धाः प्रचक्षते ॥ यस्मिन्नभासमाने हि यो नामार्थो न भासते ! नासावर्थान्तरस्त (रं त?) स्मान्मिथ्येन्दुरिव चन्द्रतः ॥ अभासमाने विज्ञाने न चात्मार्थावभा-सनम् । इति संविद्विवर्तत्वं प्रपञ्चः स्फुटमञ्चति ॥

(तत्खण्डनम्)

(38) .... मैवं (मा नामैवं ?) परिभवः; प्रत्यक्षेण बलीयसा । संरक्ष्य-माणभेदास्ते नानुमानानुवर्तिनः ॥ तथाहीदमहं वेद्मीत्यन्योन्याना-

---

प्रमाणसिद्धत्वे तदेकमात्रस्वीकारे पक्षपात इति । पक्षबाध इति पाठे अद्वितीयत्व-सिद्धान्तभङ्ग इत्यर्थः । १. यथावस्थितैः । बाह्यैरित्यनेन आन्तरसंविद्वैलक्षण्यं दर्श्यते । अत्र मीमांसाकृतानिरालम्बनवाददूषणसरणिरभिप्रेता । अत एव सम-नन्तरमेतदसहमानस्य सहोपलम्भनियमावलम्बनेन पुनरुत्थानम् । २. 'सहो-पलम्भनियम' इति, 'नचे' दिति चार्धद्वयं विनैव क्वचित्तालकोशे पाठः । अस्य च सहोपलम्भपक्षदूषणपरत्वात्, उपर्येव पूर्वपक्षप्रस्तावात्, ततःपश्चा-द्यत्र क्वापि तत्खण्डनग्रन्थमध्ये निवेशः स्वरसः। नचेदित्यस्य, 'माभूदिति चेत्—तर्हि' त्यर्थः । यद्वा सौगतैस्सामान्यापलापात् संवेदनास्पदं सर्वं ससामान्यं न चेत्, संविदः कथमप्यनुगमायोगादेकैकसंविदैव सहोपलम्भनियमो वाच्यः; स चा-संभवीति विशिष्टार्थः । अयमर्थः आ. सि. ५१ पु. । ३. शङ्कते सहेत्या-द्यर्धसप्तकेन । 'सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानै-र्दृश्य इन्दाविवाद्वये' इति बौद्धः । ४. ग्राहकस्यात्मनो ग्राह्याणामर्थानाञ्च भा-

त्मना स्फुटम् । अयं साक्षाच्चकास्तीति सर्वेषामात्मसाक्षिकम् ॥ प्रत्यक्षप्रतिपक्षञ्च नानुमानं प्रवर्तते । न हि वह्नेरनुष्णत्वं द्रव्यत्वादनुमीयते ॥ किञ्च हेतुर्विरुद्धोऽयं सहभावो द्वयोर्यतः – तवाहि नत् हि [तवापि नहि?] (तथाहि – न हि ?) संवित्तिस्स्वात्मना सह भासते ॥ 'नीलाद्युपप्लवापेतस्वच्छचिन्मात्रसन्ततिः । स्वापादौ भासते, नैवमर्थस्संवेदनात्पृथक् ॥ तेन संवेदनं सत्यं संवेद्योऽर्थस्त्वसन्' इति । तदेतदपरामृष्टस्ववाग्बाधस्य जल्पितम् ॥ सहोपलंभनियमो येनैवं सति हीयते । यस्माद्दते यदाभाति भाति य (त ?) स्माद्दतेऽपि तत्॥ घटाद्दतेऽपि निर्भातः पटादिव घटः स्वयम् ॥

( इतःपरस्संवित्सिद्धिग्रन्थो नोपलभ्यते )

श्रीभगवद्यामुनमुनये नमः

नमो नमो यामुनाय यामुनाय नमो नमः ।
नमो नमो यामुनाय यामुनाय नमो नमः ॥




---

नम् । १. यस्माद्वस्तुनः यत् ज्ञानम् । तस्मात् ज्ञानविशेषात् । तत् वस्तु । २. शत्रन्तात्पञ्चमी ; घटं विनापि भासमानात्पटाद्दते घट इव भातीत्यन्वयः ॥ एतदुपरि सर्वो ग्रन्थो नष्टः । अद्वितीयश्रुतिविमर्श – सत्त्वासत्त्ववाद – तत्त्वमसिविचारेभ्यः पश्चात्प्रवर्तितो यो विस्तरेण संविदद्वैतपूर्वपक्षस्तस्य खण्डनमेतावतापि न समाप्तम् । प्रत्यक्षानुमित्यादिरूपेण विचित्राणां संविदां प्रमातृभेदाद्विषयभेदाच्च भेदं सिद्धान्तारम्भे प्रदर्श्य, तदुपरि सर्वापलापाय प्रस्तुताया अविद्यायास्स्वरूपादि प्रदूष्य, ततस्संविदस्सधर्मकत्वादपि संविदद्वितीयत्वं दुर्वचमित्यारभ्य, धर्माणामपोहरूपाणां सदसद्व्यतिरेकप्रसङ्गे प्रपञ्चसदसद्व्यतिरेकमेव निरस्य, एवं संविद्धर्माणां विषयप्रपञ्चस्य च वास्तवतया सर्वापलापायोगमभिधाय, पुनर्बौद्धसरण्या संविदतिरिक्तनिरसनाय सहोपलम्भनियमप्रस्तावे तत्खण्डनमत्र क्रियते । एतत् समाप्य शिष्टं संविदद्वैतपूर्वपक्षिप्रस्तुतांशसमाधानं वक्तव्यमस्तीति ॥

उपक्रमादिलुप्तांशलिप्सया त्वियमादिमा। संवित्सिद्धिर्मातृकादिक्रमाच्चान्ते परिष्कृता ॥
अभिनन्दन्ति बालस्य स्खलतोपि पदक्रमम्। भ्रान्तेः पुरुषधर्मत्वात्तुष्येद्दृष्ट्येव कःपुनः
स्वोक्तमप्युज्झ्यते स्वेन सता दुष्टं परैः किमु। गुणश्लाघिबुधप्रीत्यै गुरुभक्त्योद्यतं मया
इत्थं विरचितानेकशास्त्रसाहित्यवाङ्मयः।तर्कार्णवायुपाख्यो यस्सोऽहं श्रीवीरराघवः॥
प्रणीतानेकसुश्लाघ्यप्रबन्धैर्गुणभूषणैः। यतीन्द्रैः प्राज्ञसच्छिष्यबृन्दस्तुतपदाम्बुजैः॥
**श्रीरङ्गलक्ष्मणाभिख्यैर्यैररम्यपरयामुनैः**। देशिकैर्बोधिताशेषगूढार्थो यैर्दयाघनैः॥
लम्भितोभयमीमांसावल्लभाख्यश्च संसदि। एषां षष्ट्यब्दसंपूर्तिमहसत्कारकाम्यया ॥
प्रत्नं **सिद्धित्रयं** प्रौढं भगवद्यामुनोद्गतम्। सुहृत्संप्रेरितः प्रीत्या परिष्कृत्य स्वकीयया॥
**गूढप्रकाश**टिप्पण्या संयोज्याद्य समर्पये। दैवतं ये ममैतेभ्यो गुरुभ्यो रोचतामिदम्॥
वाञ्छा परं भवति वक्तुमनुक्तमन्यैः एवं विचिन्त्य कथितञ्च परत्र दृश्यम्।
दृश्यं न यत् तदपि बाध्यमबाधितञ्च प्राज्ञो न मृष्यति परस्तु न वेत्ति किञ्चित्॥
'यतिपतिरवधत्ते यामुनार्यस्स्वयं वे' त्यनघनिगमचूडासूरिसूक्तप्रकारा।
क्व तु कृतिरियमीदृक् क्वाहमज्ञोऽन्यसक्तः कथमपि गुणमन्विष्यात्र तुष्यन्तु सन्तः॥

वेधोजिह्वाग्रवासिन्यपि भवति कला भारती यस्य यस्य
त्वास्थानं भाति नित्यं निरवधिमहिमाचार्यजिह्वा स देवः।
सच्चित्तक्षेत्ररूढस्वकचरणयुगीभक्तिवल्लीप्रसूनैः
तत्त्वज्ञानप्रसूनै र्जनमिह निखिलं वासयेद्वाजिवक्त्रः॥

**इति श्री वीरराघवाचार्य विरचितम्**
**गूढप्रकाशाख्यम्**
सिद्धित्रयटिप्पणम्।
श्रीमते रङ्गरामानुजमहादेशिकाय नमः



॥ शुभमस्तु ॥

॥ श्रीः ॥

# टिप्पणपरिशिष्टम्

टिप्पणकटाक्षणोपरि गुरुचरणैरनुगृहीतमिह घटयन् ।
क्वाचित्कमूल – टिप्पणसुव्यक्त्यै वर्तयामि परिशिष्टम् ॥

१-६ **नित्यसिद्धै**रिति सहेति शेषः । प्रकृत्यादयो नित्यसिद्धाश्चानुविदधतीति ।

१-१ विरुद्धमतय इत्यत्र विरुद्धख्यातय इति, यतो विमतय इति च पा०

१-७ **मन इ**तीति । पूर्वापरानुसारादत्रापि इतिकरणं न युक्तमिव; अथापि प्रामाणिकं यत् मनः तद्व्यतिरिक्ते मनस्त्वारोपेण मनआत्मवादो वादिभिः कृत इति ज्ञापयितुं तत् ।

६-४ सिद्धान्ते आत्मन्यनुभूत्यात्मकबोधरूपत्वस्यानिष्टत्वात् तत्र ज्ञानव्यवहारस्यौपचारिकताया वक्ष्यमाणत्वाच्च बोधरूपत्वानुक्तिः । स्वयञ्ज्योतिष्ट्वन्तु समनन्तरमुच्यत एवेति स्थितनिर्वाहप्रकारः । अत्र अन्येत्वित्यारभ्य कृत्स्नमेकं मतमिति युक्तमिति संभावना । तदनुकूलः द्वितीयं अन्यइति पदं विना पाठोपि संप्रति लक्ष्यते, ‘ अन्ये तु ज्ञानानन्दस्वभावमिमं मन्यमानाः अस्याश्रयानुकूल्य....स्वाभाविक इती ’ ति मद्रनगरराजकीयपुस्तकभाण्डागारकोशे (R. ४९३३ ), आन्ध्रमुद्रणे अधस्ताच्च ।

६-८ **ज्ञानस्वभावतया** ज्ञस्वाभाव्येन । वक्ष्यति चेदं ८८ पु.

६.१० अनुमानस्य श्रुतमननरूपत्वे ततोज्ञानं विशदतरम् । क्वचिदनुमानं पूर्वमपि निर्देक्ष्यते ।

६-११ **अन्तत** इत्यस्य भावनाप्रकर्षपर्यन्त इति वाऽर्थः; तथोपरि दर्शनात् ।

७-१ अत्र सिद्धान्त्यभिमताणुपरिमाणत्वस्य शरीरपरिमाणत्वपक्षात्पूर्वं कथनवत् चैतन्यमात्रेणेति सिद्धान्तिपक्षस्यापि पूर्वं कथनसंभवात् स्वरूपेणेति पक्षान्तरपरमेवास्तु । श्रुतप्रकाशिकादष्टं वाक्यं तु आत्मसिद्धौ स्थलान्तरे स्यादिति मन्तुमवसरोऽस्ति । परन्तु टिप्पण्याशय एवम् — सर्वत्र सिद्धान्तिपक्षस्यैवान्ते कीर्तनादिहाप्येवम् । तथाच गुणत्वाद् ज्ञानस्य व्याप्त्यनर्हत्वमाभिमत्यैवात्माणुत्वं

वदतां, नित्योपलब्ध्यनुपलब्धिप्रसंगादिना परममहत्त्वमनिच्छतां मतं प्राक् 'अणुपरिमाण' इति प्रस्तुत्य, 'पादे मे वेदना, शिरसि सुख' मित्याद्यनुसंधानोपपत्तयेऽणुत्वत्यागिनां शरीरपरिमाणपक्षमुपन्यस्य, ततः व्याप्यवस्त्वनुरूपपरिमाणरहितोपि ज्ञानव्याप्तिस्वीकारात्कृत्स्नशरीरसुखाद्यनुभावी भवितुमर्हतीति सिद्धान्तिपक्षेण निगमनमिति। शरीरपरिमाण इति क्वचित्कोशे न। तदा सिद्धान्तिपक्षोऽन्ते इति निर्बाधम्।

७-२ अत्रात्मानित्यत्ववादिनश्चतुर्विधा इति सर्वार्थसिद्धिरनुसन्धेया (जी. १७)

७-४ अत्र चकार एवानुक्तसमुच्चायकः स्वतस्सुखित्वादिविकल्पं समुच्चिनोति। **तथातथे**ति पूर्वोक्तसर्वप्रकारपरामर्शी तद्विकल्पस्यापि परामर्शकः।

८.३ स्वभावमायेत्यत्र स्वभावं मायेति पा०

८-४ प्रकृष्टसत्त्वरूपमुपादानकारणं **निमित्तं** जनकं यस्य परिणामविशेषस्य तन्मात्रे **नियमेन** संकल्पव्यवस्थानुसारेण निर्वाहिता सर्वैश्वर्यमर्यादा यस्य तादृशमित्यर्थः।

८-१२ 'विष्णुर्ब्रह्मा च रुद्रश्च विष्णुरेव दिवाकरः। तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दना' दिति मूर्तिचतुष्टयमात्रग्राहि तात्पर्यचन्द्रिकोद्धृतं (गी. ८–१३) वचनम्।

९-७ अनादीत्यादि अनाद्यविद्यारूपोपादानविशेषमूलक इत्यर्थकम्।

९.८ परमार्थतस्त्वेकत्वश्रुतेरेकं तत्त्वमिति पा०

९-१० विशिष्टभावेन भिन्नत्वम्; स्वरूपभावेनाभिन्नत्वम्। अभेदो नामान्वय इत्यादिकमवान्तरानेकमताभिप्रायेणापि स्यादित्याहुः।

९.११ अंशांशिभावलक्षणसमवाय इति पा०

९-१७ स्वरूपाविर्भावस्य सिद्धान्तत्वात् अत्र 'लक्षणः' इति न स्यात्? सांसिद्धिकानन्दादिस्वरूपाविर्भाव—तद्गुणानुभवेति समस्तमेकपदं स्यात्?

१०-१३ **द्रमिडाचार्यः** वाक्यग्रन्थोपरि भाष्यकर्ता, यस्य भाष्यस्योपरि वामनटीकेति श्रु. प्र. तो ज्ञायते (श्रीभाष्यद्वितीयश्लोके, लघुसिद्धान्ते च)

१०-१५ **टङ्कः** प्रशंसितो यतिराजसप्ततौ 'निरातङ्काः टङ्कद्रमिडगुहदेव-

प्रभृतय ' इति । एवं वेदार्थसंग्रहेऽपि (१५४ पु.) भगवद्बोधायन–टङ्क–द्रमिड गुहदेव–कपर्दि–भारुचिप्रभृति....व्याख्यानेत्यादि । ' एवंभूतस्य सितासितनिबन्धनकारिमध्यप्रवेशनमिह परममुख्यार्थेऽवैषम्येऽप्यन्यत्रान्यथात्वादिना स्यात् । अत्राप्याचार्येति विशेषणेन टङ्कस्यांशतः प्रशंसापि स्यात् । अत्र सितनिबन्धनकारिणः केचित्; असितनिबन्धनकारिणश्चान्ये इत्यप्यभिप्रयन्ति ।

**भर्तृप्रपञ्चो**ऽद्वैती स्यात् । तदुक्तमनूक्तं प्रकरणपञ्चिकायाम् (८ पृ.) 'यत्त्विदं प्रपञ्चेन साधितम् प्रत्यक्षादिविरोधेप्याम्नायस्य बलीयस्त्वम् । तद्वशेन प्रत्यक्षादीनामेव भ्रान्तता कल्पनीयेति'इति । 'न दृष्टेर्द्रष्टारं पश्येः' (बृ. ३ ४ २) इत्यत्र शाङ्करोपनिषद्भाष्ये प्रपञ्चकृतं व्याख्यानं दूषितमस्ति । तदौचित्यविमर्शश्चास्मत्कृतपरमार्थप्रकाशिकाग्रन्थे ( १७४ पु. ) कृतो द्रष्टव्यः ।

**भर्तृमित्रं** मनसिकृत्यैवादौ श्लोकवार्तिके, 'प्रायेणैव हि मीमांसा लोके लोकायतीकृता ' इति, ' इममेव च संस्कारं श्रोत्रग्रहणकारणम् । केचित्तु पण्डितंमन्याः श्रोत्रमित्यभिमन्वते ( १-६-१३० ) इति चोक्तमिति न्यायरत्नाकरादवसीयते । तदयं नित्यनिषिद्धयोरिष्टानिष्टं फलं निषेधति, श्रोत्रेन्द्रियञ्च यथावन्नेच्छति । वेदान्तवादोऽस्य कीदृश इति विमृश्यम् ।

**भर्तृहरिः** स्फोटस्थापकः शब्दाद्वैतवादी ।

**ब्रह्मदत्तो** भेदाभेदवादीति परमतभङ्गे भास्करभङ्गाधिकारे । सर्वार्थसिद्धौ च जीवसरे ( १६ ) ब्रह्मदत्तादिभिरुक्तं जीवानां स्वरूपतस्सृष्टिसंहृतिविषयत्वमिति । तदयं यादवप्रकाशतुल्यः ।

११-२ ' बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः । नानाभूतः प्रतिक्षेत्रमात्मवित्तिषु भासते ॥'इति पञ्चिका (त.प्र.)। अत्रोक्तं वित्तिभास्यत्वादि 'अनन्यसाधन'इत्येतद्विवरणादौ निराकरिष्यते । एतदात्मसिद्धिकृता देहेन्द्रियादिभेदप्रतिपादनसरणिर्नन्दीश्वरकृते प्रभाकरविजयेपि । विशिष्य देहेन्द्रियविषयमात्रे, न केवलं प्रमेयतः, पदवाक्यपरिस्थितितश्च बहुलमनयोस्संवादो विस्पष्टमस्ति । परन्तु नन्दीश्वरग्रन्थादत्र गाम्भीर्यं संदर्भसौष्ठवमधिकांशबोधनञ्चापह्नोतुमशक्यम् । नन्दीश्वरश्च शालिकनाथ–भवनाथरूप नाथद्वयादर्वाचीन इति ' नाथद्वयात्तसारे'

इति तच्छ्लोक एव दर्शयतीत्यलमत्राल्पके विस्तरेण ।

११-१७ तथेहापि इति पूर्वस्थितस्य 'ग्रहणनियम' इति वाक्यसमनन्तरं पाठःस्थितस्स्यात् ।

१२-७ अपिचेति वाक्यं काठिन्यानैकान्तनिगमनानन्तरं स्यादिति प्रथममालोचितम् । अथापि स्थितमनुसृत्याऽऽशयविशेषः टिप्पणेऽदर्शि । प्रभाकरविजये त्वयमंशस्ततःपश्चादेव लक्ष्यते ।

१३-१५ अहं जानामीतिस्थाने अहमिदं जानामीति स्यात् ? । [ (४७-४)

१५ ३ प्रतायमान इत्यत्र प्रतीयमान इति पा. १ तथैव च नीतिमाला –

१५-७ भवन्तिचेत्येतावन्मात्रोक्तावपि प्रयोगा इत्यर्थसिद्धम् । ईदृशसूक्तिशैल्या ईश्वरसिद्धौ बहुलमुपलम्भात् ।

१५-९ स्फुटत्वादिति । भेदप्रतिभासाभावेपीति शेषः ।

१६-१ 'यथा घटोऽयमिति प्रतिभास' इति प्र. वि. । 'यथाऽयं घट इति प्रतिभास' इति आत्मसिद्धावेव पा० क्वचित् (डि. १५२८४)

१७-२१ अत्र गुणपदमद्रव्यार्थकम् । अतश्च कार्यत्वे सतीति मूलोक्तसार्थक्यं रूपत्वादीतिं टिप्पणसांगत्यञ्च ।

१९-६ प्र. विजये, 'अतएव वचनं सत्यतपसः, द्रष्टुश्चक्षुषो नास्ति जिह्वेति 'इति, 'यत्तु सात्यतपसं वचनं तत् शरणागतपरित्राणस्यावश्यकर्तव्यतामन्यथा च व्याधस्य प्राणयात्रापत्तिञ्चालोच्योक्तमिति न दोष' इति च । श्रीवराहपुराणे (९८ अ.) 'यदि तं दर्शयाम्यस्मै वराहं हन्यते तदा । नो चेत् कुटुम्बः क्षुधया सीदत्यस्य न संशयः ', 'दृष्टश्चक्षुर्निहितं जङ्गमेषु जिह्वा वक्तुं मृगयौ तद्विसृष्टम् । द्रष्टुञ्चक्षुर्नास्ति जिह्वेह वक्तुं जिह्वायास्स्यात्तत्त्वतोऽस्तीह चक्षुः' इति । अत्रैवं शुद्धपाठस्स्यात्, 'द्रष्टुञ्चक्षुर्निहितं जङ्गमेषु जिह्वा वक्तुं मृगयो ! तद्विसृष्टम् । द्रष्टुश्चक्षुषो नास्ति जिह्वेह वक्तुं जिह्वाया वेत्येवम् ।

२१-१९ तस्य चेत्यादि । अत्रायं (प्र.प.तत्त्वा–) ग्रन्थोऽनुसंधेयः, 'तच्चात्ममनस्सान्निकर्षाख्यम् । तस्य चासमवायिकारणं मानस एव परिस्पन्दः ! तस्याप्यात्ममनस्सान्निकर्षान्तरमात्मसमवेतं प्रयत्नमदृष्टञ्चापेक्षमाणमसमवायिकारणम् ।

प्रयत्नाददृष्टयोश्चात्ममनस्सन्निकर्षान्तरमेवेत्यनादिरेषा कार्यकारणपरम्परा ' इति । आत्मसिद्धिग्रन्थे तु मनःस्थाने इन्द्रियमेवोक्तम् । टिप्पणे तद्धेतुरित्यस्य विषयसंप्रयोगरूपविशेषणांशहेतुत्वोक्तिरात्मनो विभुतयाऽऽत्मेन्द्रियसन्निकर्षस्य सूपपादत्वाभिप्रायेण । विशेष्यभूतेन्द्रियसंप्रयोगपरत्वमेव वाऽस्तु; तस्यापि क्रियाजन्यतया प्रकृतग्रन्थ इवार्थवर्णनसंभवात् ।

२३ १४ उपनिषद्वाक्यमिदं १०३ पुटे उदाहरिष्यते । तत्र धर्मभूतज्ञानपरत्वे मनःपदं स्वरसम् ।

२६-१२ सत्तायां रूपे चेत्यत्र, ' उपलभ्यमान ' इत्यादिपूर्ववाक्यांशानुषङ्गः । **प्रकाशत इतीति** । प्रकाशत इति पदार्थघटकः प्रकाशस्संवित् । तत्सम्बन्धाद्घटः प्रकाशत इति व्यवहारः । सैव चानुभूतिः । अतः अनुभूतिः प्रकाशत इत्यत्र न प्रकाशः कर्तृभूतानुभूत्यतिरिक्त इति ।

२६-१८ ( प्र. प. तत्त्वा – ) ' सैव परं वेदित्री भवतु । कृतमन्येन बोद्धा ' इति पूर्वम् , पश्चात्तु, ' बुद्धिरेव वरमस्तु; अलं बोद्ध्रेति यदुक्त ' मिति च परमिति वरमिति च दृश्यते ।

२७-३ अप्रकाशात्मन इत्यादि अद्वैतिभिरुच्यत इति प्र. प. त. प्रकरणे ।

२८-९ विज्ञानलक्षणेति प्रायिकः पाठः । विज्ञानक्षणेति क्वचित् ( R. ४५९७ ) । प्र. विजये (९०) ' विज्ञानलक्षणसंतानस्थायितया ' इति, ' अथ विज्ञानक्षणानां भेदेपि सौसादृश्या ' दिति च लक्षणपदं क्षणापदञ्चोपलभ्यते । बौद्धाः स्वलक्षणपदेन व्यक्तिस्वरूपं व्यवहरन्ति । योगसूत्रे ( ३–१–३ ) लक्षणपदमतीतवर्तमानाद्यवस्थापरं दृष्टम् ( भावागणेशवृत्तौ ) । अतो विज्ञानलक्षणेति पाठप्रमाण्ये अतीताद्यवस्थविज्ञानव्यक्तीत्यर्थस्स्यात् ।

३२-७ स्वतस्सच्चेत् सदास्तीति यथाश्रुतान्वय एव वाऽस्तु ।

३३-१७ इति वक्तव्य इति । इतिवस्तुस्थितिरिति तथैव प्रमेये वक्तव्ये इति यावत् । इति निर्देशः = इतिप्रतीतिसंपादकवाक्यनिर्देशः ।

३४-६ **शब्दार्थग्रहणे**ति अस्य शब्दस्यायमर्थ इति ग्रहणेत्यर्थः; शब्दार्थसंबन्धग्रहणेति यावत् । [ पाठस्स्यात् ।

३५-५ तद्विकाराइत्यनन्तरं सन्तीत्यत्र ' सत्त्रे ' इति वा ' सन्तु ' इति वा

३७-२ अहमिदमन्वभूवमिति अहमर्थस्य कर्तुरिदमर्थस्य कर्मणश्चैव पूर्वा-परकालस्थायिता प्रतीयते । अनुभूतिस्तु अनुपूर्वकभूधात्वर्थः । नास्याः कर्तृकर्म-पदार्थता । अनुभूतेर्नित्यत्वे प्रतिसंधानसामञ्जस्यादनुभूतेरात्मत्वं सुस्थमिति परा-शयः । प्रतिसंधातृनित्यत्व एव तु प्रतिसंधानसामञ्जस्यम्, नत्वप्रतिसंधात्रनु-भूतिनित्यत्व इति न तस्या आत्मत्वमिति । 'कर्मत्ववत् कर्तृत्वमपि दुर्घट' मिति भाष्यानुसारात् अत्र कर्मेति दृष्टान्तार्थम् ।

३७.११ अवभासयन्नयं प्रत्यय इत्येतावत्स्यात् । अहमित्यधिकम् ।

३८-२४ कर्तृत्वादिति । अहम्प्रत्ययगोचरत्वादित्यपि हेतुः ।

४७ ९ अतत्प्रत्ययदर्शनादित्यशुद्धम् । तत्प्रत्ययदर्शनादिति वा पाठस्स्यात् ।

५१-२६ ननु जडे व्यभिचार इति कथं सुवचम्, नीलादेर्जडस्य पक्ष-त्वात् । सत्यम्–जडत्वादेस्संविदि बौद्धैः प्रतिषिद्धत्वाज्जडस्य पक्षत्वे बाधस्स्यादिति नीलत्वादिना पक्षता, न तु जडत्वेनेत्युक्तौ जडत्वेन जडेपि हेतुसत्त्वाद्व्यभिचार इति तात्पर्यम् ।

५४-१३ 'न च भेदोपि सिद्धिमन्तरेणे'त्यत्र, नचाभेदोपि सिद्धिमात्रेण इति, 'नचाभेदोपि सिद्धिमन्तरेणे' ति वा पाठस्स्यादित्यप्याहुः ।

५४-१६ प्र. प. प्रमाणपारायणे, 'अप्रकाशात्मकस्यैव प्रकाशव्यतिरिक्तस्य प्रकाश इति प्रकाशादेव सिद्धम्' इति ।

५५-६ न ज्ञप्तिमात्रमित्येतावदेव पाठस्स्यात् । तथेत्यधिकम् । [ थितम् ।

५८-७ अत्र अपीति न स्यादिति मन्यते । स्थितं तु कथञ्चिट्टिप्पणे सम-

५९-१ ननु सपक्षसत्त्वमप्यन्वयव्याप्तिग्रहोपयोगित्वान्न प्रकृतेऽपेक्षितमि-त्यत्र व्यतिरेकव्याप्तेर्दुर्ग्रहत्वमाह नचेति । दुष्करत्वादिति । अनुकूलतर्कस्य व्यतिरेकव्याप्तौ दुर्वच इति भावः ।

६०-६ तदसंघातत्वस्य चेति चकारः क्वचिन्न ।

६१ २६ 'तलमध्यस्यन्ति, अवाङ्मुखीभूतमहेन्द्रनीलमणिमयमहाकटाह-कल्पमित्यर्थ' इति भामती ।

६३-१ पातञ्जलयोगभाष्ये (२–१८) 'यथा जयः पराजयो वा योद्धृषु

वर्तमानः स्वामिनि व्यपदिश्यते; स हि तत्फलस्य भोक्तेति — एवं बन्धमोक्षौ बुद्धावेव वर्तमानौ पुरुषे व्यपदिश्येते; स हि तत्फलस्य भोक्ते' ति ।

६३-१० **व्यतिरेकानुमानेति**। देहादि व्यतिरेकसाधक-दूषिताविशिष्टप्रस्तुत सांख्यहेतुपरतया वाक्यमिदं टिप्पणे व्याख्यातम् । देहादिव्यतिरेकसाधक—तत्त्वादिसंमतान्वय्यादिसर्वानुमानदूषणपरतयापि शक्यं व्याख्यातुम् ।

६६-४ प्र. वि. ( ९५ पु. ) 'तर्हि चाक्षुषं रूपं, श्रावणश्शब्द इत्यादीन्द्रियविशिष्टव्यवहारा' दिति ।

६६-११ प्रथमवाक्ये चेतश्चलनमिति अनन्तरवाक्ये तच्चलनमिति च स्थितम् । लेखकप्रमादात्तु तयोर्व्यत्यास आपतित इत्यूह्यते ।

६६-१४ अत्र निरंशस्येतिस्थाने निरङ्कुशस्येति पाठः तालकोशे 'ङ्कु' अक्षरोपरिकृतनिरासचिह्नानवलोकनकृतः ।

६८-४ अत्र 'मानसप्रत्यक्षश्चात्मग्रा ( ह्य ) हि अधोनिरस्त' मिति पाठः स्यादिति पूर्वमालोचितम् । स्थितसमर्थनं टिप्पणे कृतम् । मानसप्रत्यक्षत्वमित्यस्य मानसप्रत्यक्षसिद्धत्वमित्यर्थः मानसं प्रत्यक्षं यस्येति बहुव्रीहिं विना न सुलभः । परन्तु पूर्वमपि ( ६५ ) तथा प्रयोगोऽस्ति । अत्र ग्राह्येत्यक्षरं पूर्वं संयोज्य, 'मानसप्रत्यक्षग्राह्यत्वश्चात्मनो धीव्यभिचारनिरस्त' मिति स्यादित्यपि तर्कयन्ति । अत्र आत्मग्राह्येत्यनन्तरं धीत्यतः प्राक् अक्षरभ्रंशचिह्नं क्वचिदस्ति (१५९८७)

६८-५ अत्र 'स्वपरवेद्ययोरनतिशय इत्यत्रातिशयपदेन पूर्वोक्तस्य संदेहप्रतिभटत्वरूपातिशयस्य ग्रहणे नन्वित्यादिसमनन्तरवाक्योच्यमानेन स्वसमवेतबोधोत्पत्तिरूपविशेषेण यथाश्रुते संदेहनिवृत्त्युपपादनायोगात् टिप्पणे **अनुमितेत्यादिपूर्वग्रन्थः** पूर्वोक्तातिशयानिर्वाहदोषपरिहाराभिसंधिपूर्वक इत्यभिधायात्र विवक्षितोऽतिशयोऽन्य इत्युक्तम् । अस्तु वा पूर्वोक्तातिशय एवात्र विवक्षित इति । एवञ्च अनुमितेत्यादेस्तथावतरणं मा भूत् । नन्वित्यादिग्रन्थतात्पर्यन्त्वित्थम् — स्वपरवेद्यस्थले हि स्वस्मिन् बोधः, परस्मिन् बोध इति विशेषोऽस्ति । तथाच परगतबोधस्य स्वयं ज्ञाततालिङ्गानुमान—मानसप्रत्यक्षान्यतरग्राह्यत्वायोगेपि स्वगतबोधस्य तथाग्रहणसंभवात् झटित्येव तद्ग्रहणस्वीकारात् क्षणविलम्बस्य दुर्ज्ञान-

त्वाच्च न कश्चिद्दोष इति ।

६९-१७ अत्र वित्तिजनकसामग्र्येव वित्तिं वेदितारञ्च भासयतीति प्राभाकराशयः । [मूलं व्याख्येयम् ।

७०-१४ आत्मसत्तैवेति पाठमपीह मन्यन्ते । तदापि टिप्पणोक्तद्वितीयरीत्या

७१-१२ अत्र तालकोशे 'स्वतन्त्र एवेति विलिख्य 'न्त्र' अक्षरोपरि निरासचिह्नं निक्षिप्तम् । तदनवधानेन तदक्षरमपि गृह्णद्भिः स्त्रीलिङ्गानुसारेण स्वतन्त्रैवेति शोधयित्वाऽन्यत्र मुद्रितम् । स्वत एवेत्येव पाठः ।

७१-२२ अयमत्रावतारिकार्थः – **यो हि यत्संविद्विषयो न भवतीति** पूर्वोक्तसामान्यमुखव्याप्तौ हेतुकोटौ वेद्यत्वे सतीति विशेषणमिष्यते । तथा च घटवित्तितदाश्रयावित्यनुमानं हेतौ वेद्यत्वविशेषणमन्तरा दुर्वचम् । तद्विशेषणे च स्वरूपासिध्या न प्रकृतसाध्यानुमानसंभव' इति ।

७२-१ उपरि **आश्रयप्रतियोगी**ति प्रतियोगिपदेन विषयग्रहणेप्यत्र प्रतियोग्यवच्छेदायेत्यत्र तत्पदेनात्मग्रहणं टिप्पणाभिमतम्, अन्ययत्किञ्चिद्भाने आत्मसंबन्धस्यापेक्षितत्ववर्णनापेक्षया स्ववैशिष्ट्यभाने स्वसंबन्धापेक्षावर्णनमुचितमिति कृत्वा । अस्तु वा विषयवैशिष्ट्यमेव प्रतियोग्यवच्छेदः स्वारस्यात् । संविदो न स्वप्रकाशायात्मापेक्षा, किन्तु विषयसंबन्धायेति । तथाच भाष्यम्, 'स्वसंबन्धितया ह्यस्यास्सत्ता विज्ञप्तितादि चे' ति ।

७२-१० वरमिति पाठे अश्रयितुमित्युचितमिव । परन्तु प्रकरणपञ्चिकादौ बहुलमीदृशः प्रयोगः । [च द्रष्टव्यम् ।

७३-६ एतत्कारिकाविवरणं तत्त्वटीकायां (२७५) न्यायकुलिशे (७५ पु.)

७३-१५ स्वापरोक्षायेति पा० ।

७५ १२ अमूर्तस्येति क्वचित्र ।

७६-७ प्रकाशकत्वेत्यत्र अर्थविशेषप्रकाशकत्वेति पाठो भाव्यते ।

७९-२ भ्रष्टमुत्तरार्धं 'चित्त्वैवान्यव्यवच्छेदे कुतश्शक्तयन्तधावन' मिति रीत्या स्यात् ।

७९-१० वरमित्येव तालपाठः ।

८० १० संभवतीत्यत्र संभवीति पा० । [प्राप्तेति स्यात् ?

८१-६ तद्भावभावित्वस्येत्युपरितनपदानुसारेणात्र अभावप्राप्तेत्यत्र भाव-

८५-१ शरीरधारणेति पाठस्स्यात् । स्थितं योजितं टिप्पणे ।

८५-५ निवृत्तेः संप्रज्ञातेत्येव सर्वत्र पाठः । निवृत्तेरित्यत्र वाक्यसमाप्तौ असंप्रज्ञातेति पाठान्तरोहो दर्शितः । तथावाक्यसमाप्तावपि संप्रज्ञातेत्येव पाठ-रक्षणाय मध्ये 'अत' इति पदमुचितं तर्कितम् ।

८५-८ प्रत्यवमर्शाश्चात्र दर्शितप्रकारा योगभाष्ये (१-१०) द्रष्टव्याः ।

८७-११ अर्थान्तवर्तिन इति अन्तरवर्तिन इति च पा०

८९-४ संगीयेतेतिस्थाने 'स गीयेते' ति स्यादिति दर्शितम् । संप्रति 'संगीर्येते'ति स्यादित्यालोच्यते; यथा (प्र.प.३) 'मीमांसकैरपि संगीर्यत' इति ।

९१-२ आशङ्क्यपरिहारमिति पाठान्तरं अशक्यपरिहारमिति शोधितम् ।

१०८-१ 'रसनादिभिः रजतातिवृत्ते' त्यत्र रसनादिभिरजातातिवृत्तेति कृतं शोधनं 'केनचित्तालकोशेनापि (५०७२) रक्षितम् । एवमेव —

,, ४ 'अपेक्षितार्थसन्निकर्षसहकारिविरहे' इति समस्तपदसंभावना -अपेक्षित सन्निकर्ष सहकारिविरह' इति (डि. १५२८४) कोशीयपाठदर्श-नेन स्थैर्यमर्हति ।

१०९-१८ अत्र 'एषा च दिक् क्रमेणान्त्यावयविभ्योऽवतरन्ती आद्व्यणुक-मवतिष्ठत' इति प्र. प. वचनं स्मार्यते ।

११०-११ अत्र टिप्पणे तनुशब्दविषयविमर्शावकाशकल्पनं कतरशब्दग्रहणे-ऽर्थक्लेशोऽनधिक इति श्रीभाष्यव्याख्यालोडनेन विमर्शार्थम् । न तु तनुशब्दो-ऽनुपपन्न इत्याशयेन; न्यायवार्तिकतात्पर्यटीकायां (४ १-२१) 'तनुतरुमही-धर', 'तरुमहीधर', 'तनुभुवनादि' इति नानारूपप्रयोगदर्शनात् ।

११२-२ कार्यत्वसाध्यकत्वे शक्यक्रियत्वमुपाधिः; चेतनाधिष्ठितत्वसाध्यकत्वे शक्यज्ञानत्वमुपाधिरिति नयविवेके (१९४) प्रभाकरविजये (८२, ७९) च । अत्र चेतनकर्तृकत्वे साध्ये उभयमुपाधिरुच्यते ।

११७-१२ अधिष्ठातृदेहानुप्रवेश इति अधिष्ठात्रन्तरानुप्रवेश इति च पा०

११७-१६ अस्त्वेकतत्त्व संबद्धस्याधिष्ठानेत्यत्र, 'नह्येतत्। किन्तु तदसंबद्धस्य तदधिष्ठाने ' ति प्रक्षेपबहुले कोशे पाठः ।

१२०-६ प्रकृतिशब्द उपादानार्थकः ।

१२४-२ क्वचित्तालकोशे व्रत्यर्थस्येति पाठ. । अन्यत्र सर्वत्र 'वत्यर्थस्ये'ति ।

१२७-४ जन्ययोगात् जनेरुत्पत्तेरयोगात् ।

१२५-६ प्रधानसंख्येयः संख्यायामित्येव सर्वत्र पाठः ।

१३८-१५ वर्तिन्शब्दस्य पृथक्प्रयोगस्साधुश्चेत्, तदा पूर्वं पश्चाच्च सिद्धान्तिवाक्यम् ; इयं तु कारिका शङ्कितुरिति टिप्पणोक्तरीतिः । असाधुश्चेत् – 'वर्तिताः' इति शोधनीयं स्यात् । एवञ्च, ' ज्ञानानन्दादिशब्दाः न (नो) (किं) न सतस्साद्वितीयते 'त्युत्तरार्धं शोध्यम्। तदात्वियमपि कारिका सिद्धान्तिन एवेति।

१४१-११ स्वैरित्यादिकारिका शतदूषण्यां ६१ वादेऽन्ववादि ।

अर्थानुवादश्शतदूषणीस्थः प्रागेव सिद्धेरुपदर्शितोऽस्याः ।
शब्दानुवादाः स्वयमेव दृश्या ये न्यायसिद्धाञ्जन आत्मसिद्धेः॥

---

उपोद्घातं पृथग्द्रष्टुमुत्सहन्ते न वैदिकाः ।
तत्तासिद्धिमुखेऽन्तश्च तदर्थोऽतो व्यभज्यत ॥

न यत्र चिह्नं निरदेशि किञ्चिन्न टिप्पणादावपि यद् व्यचारि।
तत्रान्यथापाठ इह प्रक्लृप्तस्तालानुरोधादिति भावनीयम् ॥

स्वैरं न पाठोऽन्यथितो मयेह प्रदर्श्य दृष्टां स्थितिमन्यरीतिः।
यथार्हमावेदि मनाक् अशेषं धिया च कोशैर्विमृशन्तु सन्तः ॥

यद् ब्रह्मसिद्धिः स्फुटमिष्टसिद्धिर्नैष्कर्म्यसिद्धिश्च निरस्यतेऽत्र।
विमृश्यते तन्त्रगपाश्चिकादिग्रन्थश्च तत्तादृगिहाभिनन्द्यम् ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रीमते हयवदनपरब्रह्मणे नमः ॥

॥ शुभमस्तु ॥



# आकर सूची



---

* इ – ४ – (पु.३९४) 'नष्टेप्यर्थे तत्स्मृतिदर्शनान्न सार्था स्मृतिः । कथं तत्स्मृतिस्तं विनोति चेत् – तदाकारत्वात् ' इति । अत्र व्याख्या, ' इतश्च स्मृतिर्न बाह्यालम्बनेत्याहे ' ति ।

## सिद्धित्रय – टिप्पण – परिशिष्ट-
## निर्दिष्ट नाम सूची
(गीतापुराणोपनिषद्विषयनामसूचनं तु न)

# कारिका सूची

## आत्मसिद्धि



## ईश्वरसिद्धि



संवित्सिद्धेः कारिकामयत्वात् बाहुल्यात् तत्कारिकासूची न विधीयते ।

# शो ध नि का

| पुट. | प०. | |
|---|---|---|
| ४ | १२ | तत्साधकः प्रबन्धः पृ- |
| ८ | १६ | आरोपिताविघक [धक् |
| ८ | २६ | चतुर्मूर्तिपक्षमुक्त्वा |
| ९ | २० | सन्मात्रविकृतयोः |
| ११ | ८ | इतरथा |
| १५ | ४-५ | तत्रास्मच्छब्दस्या |
| २३ | ११ | (छा०, ६ - ४ ) |
| २३ | १२ | ननु तत्र |
| २६ | ३ | भावेपि ततः प्रागेव, |
| २७ | १८ | एवमहमर्थ |
| ,, | २५ | ग्राह्यग्राह |
| २८ | ५-६ | समर्थनेन |
| २८ | १६ | न च सुसद |
| ३२ | २६ | 'युगेव ह्री ' ति |
| ४९ | ९ | ताऽहमर्थ |
| ५१ | ९ | जडत्वादिभिः |
| ५९ | ८ | अप्यपोदिता |
| ७६ | २६ | परामृश्यमानं |
| ७९ | २३ | अपिचेति |
| ८९ | ४ | (स गीयेत?)(संगीर्येत?) |
| १०५ | २४ | प्रथमांशैक |
| १०९ | २२ | सिषाधयिषित |
| १२५ | १५ | लोहबीजादि |
| १२७ | ७ | यच्छ्रुतम् |
| १३१ | १ | जल्पितम् |
| १३५ | २४ | सार्वज्ञ्य |
| ,, | २० | सर्वज्ञान्तरासिद्धिः |
| १३६ | २३ | ब्रह्मास्मीति |
| १८६ | २० | इत्युपक्रान्त |

मुद्रणे मातृकात्वेनोपयुक्तं काश्यां मुद्रितं देवनागरलिपिपुस्तकम् ; आन्ध्रलिपिपुस्तकञ्च । श्रीवेङ्कटेश प्राच्यविद्यापुस्तकभाण्डागारस्थो ग्रन्थाक्षरतालकोशोऽप्यान्तमवैक्षि । मद्रनगरराजकीय पुस्तकभाण्डागारस्थिताश्च कोशास्तत्रतत्र यथावसरमलोकिषत ॥ अस्ति पुनः अण्णामलैविश्वविद्यालये मुद्रितं आङ्गलभाषापरिवृत्तिसहितं सिद्धित्रयं प्रायःप्राप्तप्रचारम् ; यस्य मुद्रणे मादृशैरपि मूलशोधनादौ यथावसरं नूनमुपकृतम् । परन्तु पृथक् टिप्पणेन सह संप्रति शुद्धसंस्कृतमात्रमुद्रणे प्रवृत्तेन ऐदम्पर्यमधिकं यथावसरं वहता मया भूयः पाठशोधनेन, स्थितपाठार्थ विमर्शनेन, विषयविभजनेन, विशेषचिन्तनेन, प्राचीनग्रन्थसंवादानुवादप्रदर्शनेन च यथाशक्ति प्रेक्षावतां प्रीणनाय सुबहु व्यापृतम् । फलांशे तु सन्तः प्रमाणम् । अधिकं तु सतामादरात् पुनर्मुद्रणे प्रतीक्ष्यम् ॥

अस्य सिद्धित्रयस्य निर्माता श्रीभगवद्यामुनमुनिः कवेरजाभागपरिसरप्रख्यात श्रीवीरनारायण ( काट्टुमन्नार्गुडि ) पुराभिजनस्य बाह्यकुदृष्टिनिरसनेन स्वमतस्थापनाय न्यायतत्त्वं शास्त्रं भगवत्तद्भक्तसाक्षात्कारानुभवसंपत्तये योगरहस्यञ्च प्रणीतवतो योगिसार्वभौमस्य श्रीभगवन्नाथमुनेः पौत्रः ईश्वरमुनिपुत्रः चोलराजास्थानपण्डितं विजित्य प्राप्तार्धराज्यः पितामहशरणादिष्टेन तच्छिष्येण श्रीपुण्डरीकाक्षसूरिणा स्वाशक्त्यवस्थामालोक्य स्वशिष्य श्रीराममिश्रमुखेन विबोधितविशेषार्थस्त्रिदण्डधारी परमतनिरसनादिना परिरक्षितवेदवैदिकः स्वस्य स्थविरे श्रीभगवद्रामानुजमनुगृह्य तन्मुखेन स्थापितपुरातनसिद्धान्तः ( आङ्गलगणनया एकादशद्वादशशतकमध्यकाले लब्धोऽभ्युदयः ); येन हि विजयप्रस्थाने विशिष्य घोषिताविमौ श्लोकाविति संप्रदायः –

‘ न वयं कवयस्तु केवलं न वयं केवलतन्त्रपारगाः ।
अपितु प्रतिवादिवारणप्रकटाटोपविपाटनक्षमाः ॥ ’

‘ आ शैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात्
आ रक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।
आ च प्राच्यप्रतीच्यक्षितिधरयुगलादर्कसोमावतंसात्
मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः ॥ ’ इति॥

एतदनुगृहीताश्च प्रबन्धाः– श्री चतुःश्लोकी, स्तोत्ररत्नम्, आगमप्रामाण्यम्, गीतार्थसंग्रहः, पुरुषनिर्णयः, सिद्धित्रयञ्च। अत्र पुरुषनिर्णयस्सर्वथैव नोपलभ्यते; शिष्टेषु च सिद्धित्रयादन्ये ग्रन्थाः सामग्र्येण लब्धास्सम्यगेव परिष्कृत्य मुद्रितास्समुल्लसन्तीति साम्प्रतमिदमेव मुद्रयित्वा प्रकाश्यते ।

श्रीभगवद्यामुनमुनये नमः॥

---

श्रीरङ्गरामानुजमहादेशिकषष्ट्यब्दपूर्तिसमये संप्राप्तप्रकाशानि तावत् –

आचार्यानुगृहीतं भेदसाम्राज्यम्, सिद्धित्रयम्, पण्डितप्रकाण्डैस्तच्छिष्यैरन्यैश्च विरचितानि तद्विषयस्तोत्राणि, मणिप्रवालमयस्तादिव्यचरितग्रन्थश्च ॥

॥ श्रीरस्तु ॥ शुभमस्तु ॥

---

१. एतच्चरितं विशिष्य दिव्यसूरिचरितकाव्यादौ द्रष्टव्यम् ।